

श्रीमत् शङ्करभगवत्पादोपदिष्टः अद्वैतमार्गः

# समाधिः राजयोगः

श्री परमहंस परिव्राजकवर्याणां श्रीमत् शङ्करानन्द सरस्वती स्वामिनां शिष्येण श्रीसदानन्द सरस्वत्या संकलितः



*Printed at*
**The Jwala Printing Works,**
A 2/31, Trilochanghat, Banaras.
Press Banaras—5-3-1956

मूल्यं नास्ति

*My address*—**Sadanand Saraswati (Swami)**
Near KEDARGHAT. P. O. BANARAS.

## संकेत विवरणम्

= तदेतत् = एतदुक्तं भवति

.·. = तस्मात्कारणात्

? = तत् कथमिति चेत् उच्यते ॥

+ = तत्सहितम्

## आधार-ग्रन्थ सूचकानि

| | |
|---|---|
| अ | अपरोक्षानुभूतिः |
| आ | आत्मबोधः |
| उ | उपदेशसाहस्री |
| उ गी | उत्तरगीता |
| गी | भगवद्गीता |
| गी भा | गीताभाष्यं श्रीमत् शंकराचार्यकृतम् |
| गू | „ „ गूढार्थदीपिका—श्रीमधुसूदनीयम् |
| गौ | गौडपादकारिका-माण्डूक्यम् |
| प | पंचदश प्रकरणम् (श्रीविद्यारण्य स्वामिकृतम्) |
| ब्र | श्री सदाशिवब्रह्मेन्द्रः |
| वि | विवेकचूडामणिः |
| स | सर्ववेदान्त सारसंग्रहः—श्रीमत् शंकराचार्यकृतः |
| सन | सनत्सुजातीयं |
| सू | सूत्रम् |
| सूत | सूतसंहिता |
| स्मृ | स्मृतिः |
| शं | श्रीमत् शंकराचार्यैः इतरत्र |
| श्रु | श्रुतिः |
| पू० | पूर्व पक्षः |
| सि | सिद्धान्तः |
| ३-४-५ | इति संख्याः = अस्मिन् ग्रन्थे विषयसंख्याः |



ओं

# नम्रनिवेदनम्

## श्रीशङ्कर भगवत्पादोपदिष्टः अद्वैतमार्गः

(1) एतत् ग्रन्थरचने मम अधिकारसंपदस्ति ? कथं ?=श्रीगुरुभिरनु- ज्ञातः । अहं च निर्गुणोपासकः नादानुसन्धानपूर्वकं योगमार्गे प्रवृत्तः इति ॥

(2) बहवो महान्तः श्रवणप्राधान्येन वर्तन्ते । तेषां सन्निधानेषु समाधिविषयं प्रति निवेदयितुमपि मम दुस्साध्यमिति इतरेषां आशय-जिज्ञासया अत्र ग्रन्थरूपेण स्पष्टमुच्यते ॥ शास्त्रतः विचारणं नदोषः–तथाहि श्रवणसमाध्योर्मध्ये कस्य ज्यायमिति शास्त्रतो निर्धारणं महतेफलाय भवेत् ॥ तस्मात् एतद्वचनं अविनयः इति वा इतरेषां दूषणमिति वा न मन्तव्यमिति प्रथमा प्रार्थना ॥ द्वितीयातु अत्र योयो दोषो दृश्यते स मम निवेदनीय इति ॥

(3) मठाधिपानां विषये नायं विचारः । तेषामनुष्ठेयं प्रति पृथगेव निवेदितमस्ति = प 14/47...58/श्रु 82

(4) सर्वे सुखमनुभवितुमीहन्ते । साधनं जिज्ञासमाना बहवः लोक-दृष्टिमनुसृत्य वित्तमेव तत्साधनं विदन्ते । विवेचकास्तु आत्मसुखमेव सुख-मिति निश्चित्य स्वमानसे अनुभवन्तीति ज्ञायते ॥ ∵ शास्त्रतः परमात्मस्व रूपं निश्चित्य कृतः योगाभ्यासः यतीनाम् इतरेषां च महते फलाय भवेदिति शास्त्रदृष्टोऽपि कैश्चिन्महद्भिः अन्यथा च पूर्वपक्षयित्वा निराकृतः ।

अतः बहवः शास्त्रज्ञाः श्रवणमात्रेण मुक्तिं निश्चित्य योगरहिता वर्तन्ते। केचिदद्वितीयं वर्णयन्तोऽपि गृहस्थाश्रममेव श्लाध्यं मन्यन्ते। नामसंकीर्तनेन इति केचित्। सनातनधर्मिणः ईश्वरं शरणंगताः। राज्यनिर्वाहकास्तु जाति संकरमेव लोकोद्धारणे मुख्यसाधनमिति निश्चित्य प्रवृत्ताः। भौतिकशास्त्रं महतीं वृद्धिं प्राप्य चन्द्रमण्डलमप्यारोढुं प्रवर्तते॥ एवं स्थिते आध्यात्म-विषयः योगमार्गः महताकालेन अनादृतत्वात् कृशप्रायः आसीत्॥ ज्ञान-रहितयोगंवा योगरहितज्ञानंवा उभयरहितकाषायधारणं वा न राजयोगवद् मोक्षदमिति विवक्षया (प्रतिष्ठा सूकरीविष्ठासमा इति श्रुतिं स्मृत्वा) स्व-बोधपरिशुद्ध्यर्थम् इतरेषामुपकाराय च मद्दृष्टितः यत् ज्ञातं तदत्र प्रद-शितम्। समाधौ ब्रह्मणासह ते एकीभूतत्वात् अपारशक्तियुक्ताः इत्यस्य शास्त्रतः युक्तितः महतांचरित्रेण च सिद्धत्वात् राजयोगिनां मुक्तिः महती-शक्तिः श्रेष्ठत्वं लोकोपकारित्वं च इति निश्चित्य तस्मिन् प्रयत्नः कर्तव्य इति मनीषया ग्रन्थ आरभ्यते॥ समाधिनिष्ठानां कथं महाशक्तिः लोकोपकारि-त्वम = 70/3 + 4/1

---



# विषयसूचिका

21 आत्मसमाधिरहिताः पारोक्ष्यकथाभिधायिनः
22 कृतश्रवणकर्मणां सन्यासिनां सर्वात्मसिद्धये समाधिर्विधीयते
23 परमहंसस्य योगाभ्यास एव राजमार्गः
24 योगाभ्यासरहित शास्त्रज्ञानेन वा महावाक्यावर्तनेनवा न मोक्षः = 16
25 आत्मसाक्षात्कारः कथं लभ्यते
26 आत्मतत्वस्य अतीवसूक्ष्मत्वात् समाधिना ज्ञातव्यम्
27 निर्विकल्पसमाधिना अहंकारनाशः वासनानाशः कर्मनाशः आत्मलाभः सार्वात्म्यसिद्धिश्च
28 समाधिः कदा सिद्ध्यति-कथम्
29 ब्रह्मानुभवं कदा सिद्ध्यति-कथम्
30 कथं अभ्यासः कर्तव्यः । प्रथमाभ्यासाश्च
31 अभ्यासदेशः आसनं देहरक्षणंच
32 तीव्रवैराग्यपूर्वं वासनात्यागः भावनाशक्तिः ज्ञानाभ्यासश्च योगी दृढ-मभ्यसेत्
33 सर्वप्रयत्नेन स्वेनैव यत्नः कर्तव्यः
34 योगी त्वरया उन्मनीभावं अभ्यसेत्-उपायाश्च
स्य 35 निश्चित्यि राजयोगेप्रवृत्तस्य विद्वत्सन्यासिनः अज्ञानमूलासंशयाः नश्यन्ति—अयोगी नैव आत्मानं पश्यति
36 ब्रह्मवृत्तिः श्रवणमात्रेण जायतेवा किंवा क्रियान्तरमपेक्षते
37 भ्रमर-कीटन्यायः योगिनामेव न इतरेषाम्
38 योगमार्गः दुष्करं इत्यधैर्यं त्यक्त्वा योगरतोभव योगे प्रवृत्तानामपि महत्फलत्वात् । ब्रह्माहमिति वेदने न नियमाः
39 समाधेः पूर्वं जगद्विलापन क्रमः
40 समाधौ अनुभवाः
41 समाधात् उत्तिष्ठस्य अनुभवोक्तिः
42 तत्वदृष्ट्या जगन्नास्ति

---



❀ ॐ ❀

## (1) गुरु-इष्ट-देवता वंदनं च

वेदान्तवाक्यपुष्पेभ्यो ज्ञानामृतमधूत्तमम् ।
उज्जहाराल्विद्यो नः तस्मै श्री गुरवे नमः ॥

हरि गुरु शिव योगं सर्वभूतस्थमेकं=ॐ। ओ मि ति ब्रह्म/नादलिंगं चिदात्मकम्-तस्य विज्ञान मात्रेण जीवन्मुक्तो भवेज्जनः। श्रु

## (2) अत्र राजयोगः विचार्यते

( श्री शंकरभगवत्पादोपदिष्ट अद्वैतः )

युज्=समाधौ सर्वयोगानां श्रेष्ठत्वात् राजयोगः । ब्रह्मण्येव पुरुषं योजयतीति योगः। क्षेत्रज्ञ परमात्मनोर्योगः ॥ श्रु

## (3) कः समाधिः ध्यानं किम्

(1) ब्रह्मैवास्मीति सद्वृत्त्या निरालंबतया स्थितिः। ध्यान शब्देन विख्याता परमानन्ददायिनी ॥ निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः। वृत्तिविस्मरणं सम्यक् समाधिर्ज्ञानसंज्ञकः ॥ अ

(2) ब्रह्ममात्रतया अवस्थितिः समाधिः ॥ स ॥

(3) ब्रह्मात्मनाऽवस्थानं समाधिः। वृत्तिशून्यं मनः कृत्वा। क्षेत्रज्ञं परमात्मनि। एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते ॥ श्रु

(4) ध्यानं नाम शब्दादिभ्यो विषयेभ्यः श्रोत्रादीनि करणानि मनसि उपसंहृत्य-मनश्च प्रत्यक्चेतयितरि एकाग्रतया यच्चिन्तनं तत् ध्यानं ध्यायन्तीव पर्वताः=गी भा 13/24

(5) वृत्तेः सद्भाव अभावाभ्यां उभयोर्भेद इष्यते ॥ स

(6) ध्यान निर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥ श्रु

## (4) माहात्म्यम्

(1) यथा संकल्पयेद्योगी योगयुक्तो जितेन्द्रियः। तथा तत्तद्वाप्नोति भाव एवात्र कारणम् ॥ श्रु

(2) सर्वावस्था विनिर्मुक्तः सर्वचिन्ताविवर्जितः। मृतवत्तिष्ठते योगी स मुक्तो नात्र संशयः ॥ श्रु

(3) जीवतो यस्य कैवल्यं विदेहे च स केवलः ॥ समाधिना–ब्रह्माकृत्या निवसति सुखं निष्क्रियो निर्विकल्पः ॥ वि

(4) कामक्रोधवियुक्तानां यतीनां यतचेतसां। अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम्-गी ॥ यतचेतसां सन्यासिनां सद्यो मुक्तिः उक्ता ॥ भा 5/26

(5) योऽन्तःसुखोऽ- अन्तरारामः–सयोगी ब्रह्म निर्वाणं ब्रह्मभूतोधिगच्छति ॥ बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत् सुखं। स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥ गी 5-21 ॥ उन्मत्तस्येव निष्फलं वा समाधिः ? न सः स्वरूपानन्दमनुभवति ॥ भा

(6) वाचा वक्तुमशक्य एव मनसा मन्तुं नवा शक्यते—स्वरूपानन्द वैभवम् ॥ वि

## (5) किमर्थं समाधिः ?

(1) ज्ञानं केचिद्वदन्त्यत्र केवलं तन्न सिद्धये । योगहीनं कथं ज्ञानं मोक्षदं भवतीह भोः ॥ योगोऽपि ज्ञानहीनस्तु न क्षमो मोक्षकर्मणि । तस्माज्ज्ञानं च योगंच मुमुक्षुर्दृढमभ्यसेत् । ज्ञानस्वरूपमेवादौ ज्ञेयं ज्ञानैकसाधनम् ॥ ज्ञाननिष्ठो विरक्तोपि धर्मज्ञो विजितेन्द्रियः । विना देहेऽपि योगेन न मोक्षं लभते विधे ॥ शरीरं पीड्यते तैस्तैश्चित्तं संक्षुभ्यते ततः । हठेन मृत एवासौ । मरणं यत्र सर्वेषां तत्रासौ परिजीवति । विरक्ता ज्ञानिनश्चान्ये देहेन विजिताः सदा । ते कथं योगिभिस्तुल्या मांसपिण्डाः कुदेहिनः ॥ ∴ योगेन रहितं ज्ञानं न मोक्षाय भवेद्विधे । ज्ञानेनैव विना योगो न सिद्ध्यति कदाचन । शुद्धे चेतसि तस्यैव स्वात्मज्ञानं प्रकाशते । नान्यथा शिवभाषितम् ॥ श्रु 66

(2) समाहिता ये प्रविलाप्य बाह्यं श्रोत्रादि चेतः स्वमहं चिदात्मनि । त एव मुक्ता भवपाशबन्धैः नान्येतु पारोक्ष्यकथाभिधायिनः ॥ सार्वात्म्यसिद्धये भिक्षोः कृतश्रवणकर्मणः । समाधि विदधात्येषा शान्तो दान्त इति श्रुतिः ॥ अज्ञानहृदयग्रन्थेर्निःशेषविलयस्तदा । समाधिनाऽविकल्पेन यदा अद्वैतात्मदर्शनम् ॥ वि

(3) अनुभूतिं विना मूढो वृथा ब्रह्मणि मोदते । प्रतिबिंबित शाखाग्रफलास्वादनमोदवत् / श्रु = वेदान्तश्रवणेषु योगाभ्यासं विना मोदते ॥

## (6) समाधीनां भेदाः

(1) योगश्चित्तवृत्तिनिरोधः । सू

(2) भाव वृत्याहि भावत्वं शून्यवृत्याहि शून्यता। ब्रह्मवृत्याहि पूर्णत्वं तथा पूर्णत्वमभ्यसेत्॥ ब्रह्मैवास्मीति सद्वृत्या निर्विकारतया पुनः। वृत्तिविस्मरणं सम्यक् समाधिर्ज्ञानसंज्ञकः॥ अ

(3) यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखम्। यज्ज्ञानान्नापरं ज्ञानं तत् ब्रह्मेत्यवधारयेत्॥ रूपवर्णादिकं सर्वं विहाय परमार्थवित्। परिपूर्णचिदानन्दस्वरूपेणावतिष्ठते॥ आ

(4) ज्ञानाद्यविलयेनैव ज्ञेये ब्रह्मणि केवले। तदाकाराकारितया चित्तवृत्तेरवस्थितिः। सद्भिः स एव विज्ञेयः समाधिः सविकल्पकः॥ मृदएवावभानेपि मृण्मयद्विपभानवत्। सन्मात्रवस्तु भानेपि त्रिपुटी भाति सन्मयी॥ समाधिरत एवाऽयं सविकल्प इतीर्यते॥ ज्ञात्रादिभावमुत्सृज्य ज्ञेयमात्रस्थितिर्दृढा। मनसो निर्विकल्पः स्यात् समाधिर्योगसंज्ञितः॥ जले निक्षिप्तलवणं जलमात्रतया स्थितं। पृथङ् न भाति किन्वंभ एकमेवावभासते॥ यथा तथैव सा वृत्तिः ब्रह्ममात्रतया स्थिता। पृथङ्न भाति ब्रह्मैवाद्वितीयमवभासते। ज्ञात्रादि कल्पनाऽभावान्मतोऽयं निर्विकल्पकः॥ वृत्तेः सद्भावबाधाभ्यां उभयोर्भेद इष्यते॥ ब्रह्मानन्दरसावेशादेकीभूय तदात्मना। वृत्तेर्या निश्चलावस्था स समाधिरकल्पकः॥ स

(5) द्रष्टा दृशिमात्रः शुद्धोपि प्रत्ययानुपश्यः॥ सू।=सविकल्पसमाधौ

(6) सविकल्पसमाधिः=संप्रज्ञातसमाधिः। निर्विकल्प समाधिः=असंप्रज्ञातसमाधिः/

(7) निदिध्यासनं । समाधिः । योगः । विवरणम्

(1) श्रवण मनन निर्विचिकित्से वस्तुन्येकतानतया चेतः-स्थापनं निदिध्यासनम् । ध्यातृध्याने विहाय निवातस्थितदीप-वत् ध्येयैकगोचरं चित्तं समाधिः ॥ श्रवणंतु गुरोः पूर्वं मननं तद-नन्तरम् । निदिध्यासन मित्येतत् पूर्ण बोधस्य कारणम् ॥ श्रुतेः शत-गुणं विद्यान्मननं मननादपि । निदिध्यासं लक्षगुणं अनन्तं निर्वि-कल्पकम् ॥ वाक्यार्थानुसन्धानं श्रवणं भवेत् । युक्त्या संभावि-तत्वानुसन्धानं मननंतु तत् । ताभ्यां निर्विचिकित्सेऽर्थे चेतसः — स्थापितस्य यत् । एकतानत्वमेतद्धि निदिध्यासनमुच्यते । ध्यातृ-ध्याने परित्यज्य क्रमाद् ध्येयैकगोचरम् । निवात दीपवच्चित्तं समाधिरभिधीयते ॥ श्रु

(2) निर्विकल्पसमाधिर्यो वृत्तेर्नैश्चल्यलक्षणा । तमेव योग-इत्याहुः योगशास्त्रार्थकोविदाः ॥ स

(3) श्रवण-मनन-निदिध्यासनम् = 46

## अस्मिन् ग्रन्थे

(8) अनुबन्धचतुष्टयम्=अधिकारी गुरुः शास्त्रं फलम्

(1) तीव्रवैराग्ययुक्तः पुरुषधौरेयः समाधिं भावयेत् ॥ शं

(2) श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला । समाधाव-चला बुद्धिः तदा योगमवाप्स्यसि ॥ गी

(3) अत्यन्तवैराग्यवतः समाधिः । समाहितस्यैव दृढ प्रबोधः । प्रबुद्धतत्वस्यहि बन्धमुक्तिः । मुक्तात्मनो नित्यसुखानुभूतिः ॥ वि

(4) नातपस्कस्य आत्मध्याने अधिगमः ॥ श्रु । विद्वत्सन्यासिनां मुख्याधिकारः इतरेषां गौणाधिकारः ।

गुरुः

(1) गुरूपदेशेन विना न सिद्धिः । को गुरुरधिगततत्वः शिष्यहितायोद्यतः सततम् । कोहि जगद्गुरुः शंभुः ज्ञानं कुतः शिवादेव । प्रसीदति यदभ्यासैः स गुरुः सच देवता । हरिरस्तूपदेष्टा ते हरो वा कमलोद्भवः । तथापि न तव स्वास्थ्यं सर्वविस्मरणादृते ॥ शं

(2) तटस्थिता बोधयन्ति गुरवः श्रुतयो यथा । प्रज्ञयैव तरेद्विद्वानीश्वरानुगृहीतया । स्वानुभूत्या स्वयं ज्ञात्वा स्वमात्मानमखण्डितम् । संसिद्धः ससुखं तिष्ठेन्निर्विकल्पात्मनात्मनि ॥ वि

(3) आचार्यात्पादमादत्ते-पादं शिष्यः स्वमेधया । कालेन पादमादत्ते-पादं सब्रह्मचारिभिः ॥ सन । = कालेन बुद्धिविशेष प्रादुर्भावेन ।

(4) वर्णाश्रमाचारगुरौ ब्रह्मज्ञताऽस्ति चेत् । भजेत्तमेव यत्नेन नोचेदन्यं गुरुं व्रजेत् ॥

(1) शास्त्रम् ॥ शास्त्रं विनापि संबोद्धुं गुरवोपि न शक्नुयुः । यावन्न लभ्यते शास्त्रं तावत् गां पर्यटेद्यतिः ॥ सर्वप्रयत्नेन गोपनीयं विजानता ॥ स्वानुभूतेश्च शास्त्रस्य गुरोश्चैवैकवाक्यता । यस्याभ्यासेन तेनात्मा सन्ततं चावलोक्यते ॥ पतिताः शास्त्रजालेषु प्रज्ञया तेन मोहिताः । आत्मप्रकाशरूपं तत् किं शास्त्रेण प्रकाश्यते ॥ तत्वमात्मस्थमज्ञात्वा मूढः शास्त्रेषु पश्यति । गोपः कक्षगतं छागं

यथा कूपेषु दुर्मतिः ॥ ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः। पलालमिव धान्यार्थी त्यजेत् ग्रन्थमशेषतः ॥ श्रु। + 54/9 + 75

(2) बन्धो मोक्षश्च तृप्तिश्च चिन्ताऽरोग्य क्षुधादयः। स्वेनैव वेद्या यत् ज्ञानं परेषामानुमानिकम् ॥ शास्त्रं युक्तिर्देशिकोक्तिः प्रमाणम्। चान्तः सिद्धा स्वानुभूतिः प्रमाणम् ॥ वि

(3) देवेच वेदेच गुरौच मन्त्रे तीर्थे महात्मन्यपि भेषजेच। श्रद्धा भवत्यस्य यथा यथान्तस्तथा तथा सिद्धिरुदेति पुंसाम् ॥ स

(4) अंशद्वयवति निगमे साधयति द्वैतमेव एकांशः। अद्वैत-मेव वस्तु प्रतिपादयति प्रसिद्धमपरोंशः ॥ ज्ञानस्य ज्ञानशास्त्रं प्रमाणं–कर्मणः कर्मशास्त्रम् ॥ शं

फलम् ॥ नित्यानन्दावाप्तिः। जीवतो यस्य कैवल्यं विदेहे च स केवलः। सः ब्रह्मैव स्वयम् ॥ वि। ब्रह्मादीनामपि वरेण्यः स जीवन्मुक्तः ॥ + 6/3 + 9

## (9) समाधिकरणे फलं विशेषतः

(1) परिपूर्णचिदानन्दस्वरूपेणैवावतिष्ठते। संसिद्धस्य फलं त्वेतत् जीवन्मुक्तस्य योगिनः। बहिरन्तः सदाऽनन्दरसास्वादन-मात्मनि ॥ समाधिनाऽनेन समस्तवासनाग्रन्थेर्विनाशोऽखिल-कर्मनाशः। अन्तर्बहिः सर्वत एव सर्वदा स्वरूपविस्फूर्तिरयत्नतः स्यात् ॥ वि।

(2) भिद्यते हृदयग्रंथि श्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ श्रु –

(3)शेते सुखं कस्तु समाधिनिष्ठो-जागर्ति कोवा सदसद्विवेकी ॥ समाधिनिर्धूतमलस्य चेतसो ! निवेशितस्यात्मनि यत् सुखं भवेत् । न शक्यते वर्णयितुं गिरा तदा। स्वयं तदन्तःकरणेन गृह्यते ॥ अनेक जन्मान्तर संचितैर्नरो। विमुच्यतेऽज्ञाननिमित्त पातकैः । इदं विदित्वा परमंहि पावनं । न लिप्यते व्योम इवेह कर्मभिः ॥उ । (4) यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः । यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ गी

## (10) ज्ञानम्

(1) ब्रह्मैवाहं समः शान्तः सच्चिदानन्दलक्षणः । नाहं देहो ह्यसद्रूपो ज्ञानमित्युच्यते बुधैः ॥ अ ॥ निर्विकारात्मबुद्धिश्च विद्येतीह प्रकीर्तिता—उ ॥

(2) बन्धो मोक्षश्च तृप्तिश्च चिन्ताऽरोग्यक्षुधादयः । स्वेनैव वेद्या यत् ज्ञानं परेषामानुमानिकम् ॥ ब्रह्मात्मैकत्वविज्ञानं सम्यग्ज्ञानं श्रुतेर्मतम् ॥ ब्रह्मात्मनोः शोधितयोरेकभावावगाहिनी । निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति कथ्यते ॥ वि ।= ब्रह्मवृत्तिः समाधौ ।

(3) त्यागोहि सर्वस्य निजात्मबोधः ।= शास्त्र-लोक-देहवासना त्यागः ॥ वि.

(4) चित्तं चेतनमित्येतत् शास्त्रयुक्तिविवर्जितम् । देहस्यापि प्रसंगः स्यात् चक्षुरादेः तथैव च ॥ उ= चित्ते चिदाभासः चित्तदोषसंयुतः ।

(5) बहुशास्त्रपाण्डित्यं न ज्ञानम्। अज्ञानवर्धकं न तु मोच- —
कम्। परोक्षं शास्त्रजं ज्ञानं विज्ञानं चात्मदर्शनम्। यत्तत्तु वृत्तिजं ज्ञानं विज्ञानं ज्ञानमात्रकम्। अमानित्वादिधर्मो यो यश्चाद्वेष्टृत्वादि· साधनः। ज्ञानमुत्पद्यते तस्य न बहिर्मुखचेतसः॥ शं

(6) सर्वभूतेषु येनैकं भावमव्ययमीक्षते। अविभक्तं विभक्तेषु तज्ज्ञानं सात्विकं स्मृतम्॥ गी। यत्तत्तु वृत्तिजं ज्ञानं-विज्ञानं ज्ञान-मात्रकम्॥ शं।

(7) संज्ञानं विज्ञानं प्रज्ञानं जानदभिजानत्॥ श्रु। = सर्व-मेकमेव।

(8) आत्मनः कर्तृता नास्ति बुद्धेर्बोधो न जात्वपि। जीवः सर्व-मलं ज्ञात्वा कर्ता द्रष्टेति मुह्यति॥ आ॥ = बुद्धौ चिदाभासः + — दृश्यते = 46/10

## (11) अज्ञानं नाम अविद्या=बन्धः

(1) अविद्या = माया = प्रकृतिः = अज्ञानं = तमः

(2) तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा। ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिकलौकिकैः॥ श्रु

(3) अनित्याशुचिदुःखानात्मसु नित्य शुचिसुखात्मख्याति-रविद्या। सू = देहे आत्मबुद्धिः।

(4) अतस्मिन् तद्बुद्धिः = अध्यासः। अज्ञानं भ्रम इत्याहुः विज्ञानं परमं पदम्। अज्ञानं चान्यथा ज्ञानं मायामेतां वदन्ति ते = अनिर्वाच्यं॥ शं

(5) नासती दृश्यमाना सा बाध्यमाना नवा सती । सर्पभ्रमो रज्जुविवेकतो यथा = ब्रह्मविवेकतो नाश्या । शं

(6) ब्रह्मादि शुद्धसत्वमूर्तिषु माया—मनुष्यादि मिश्रसत्वेषु अविद्या इति व्यवहारः ।। सत्व रजस्तमो गुणात्मिका अविद्या ।। यया जगत्सर्वं इदं प्रसूयते ।। वि ।। त्रिगुणसाम्यं अव्यक्तं—कारण-शरीरम् ।।

## (12) मोक्षस्वरूपं-तदवाप्तिः ?-का मुमुक्षा-मुक्त्या लाभः ?-तद्र-हितस्य हानिः ? मुक्तस्य लक्षणं-स्वात्मा केन अपहृतः ?

(1) काश्यां ब्रह्मनाले मरणात्—नामसंकीर्तनादि भक्तियोगेन—श्रौतस्मार्तकर्मानुष्ठानादि सगुणोपासनया च, सालोक्य सामीप्य सारूप्य सायुज्यादि मोक्षमाप्नोति । श्रु ।। कैवल्यमुक्तिस्तु ।

(2) साधन चतुष्टयसंपन्नाः ब्रह्मविदं विधिवदुपसंगम्य श्रवण मनन निदिध्यासन ध्यान समाधिना जीवन्मुक्तिः । प्रारब्धक्षयेन देहक्षयानन्तरं तस्यैव विदेह मुक्तिः = कैवल्यमुक्तिः । श्रु = 72/6

(3) सर्वावस्था विनिर्मुक्तः—सर्वचिन्ताविवर्जितः । मृतवत्तिष्ठते योगी स मुक्तो नात्र संशयः ।। शंखदुंदुभिनादं च न श्रुणोति कदाचन ।। अमनस्केन समाधिना जीवन्मुक्तः । प्राणशून्यं मनश्शून्यं बुद्धिशून्यं चिदात्मकम् । तस्य दर्शनं पवित्रम् ।। श्रु

(4) अमनस्कं = निश्वासलोपैर्निभृतैः शरीरैः नेत्रांबुजैरर्धनिमीलितैश्च, आविर्भवन्तीममनस्कमुद्रां आलोकयामो मुनिपुंगवानाम् ।। शं

(5) क्षेत्रज्ञ परमात्मनोरैक्येन चित्तलयं लययोगः। इन्द्रिय-वृत्तिनष्टे मनोनाशः=अमनस्कम् ॥ समाधौ मोक्षमाप्नोति त्यक्त्वा कर्म शुभाशुभं ॥ ∴.दर्शनादर्शने हित्वा स्वयं केवलरूपतः। अन्वेष्टव्यं प्रयत्नेन ब्रह्मज्योतिरान्तरम् ॥ श्रु

(6) दृष्ट्वा बाह्यं निमील्याथ स्मृत्वा तत्प्रविहाय च। अथोन्मील्यात्मनो दृष्टिं ब्रह्म प्राप्नोत्यनध्वगः ॥ उ। लोकान्तरे वाऽत्रगुहान्तरे वा तीर्थान्तरे कर्मपरंपरान्तरे। शास्त्रान्तरे नास्त्यनुपश्यतामिह स्वयं परं ब्रह्म विचार्यमाणे ॥ मर्त्यत्वसिद्धेरपि पुंस्त्वसिद्धेर्विप्रत्वसिद्धेश्च विवेकसिद्धेः। वदन्ति मुख्यं फलमेव मोक्षं व्यर्थं — समस्तं यदि चेन्न मोक्षः ॥ स्वमात्मानं परं मत्वा परमात्मानमन्यथा। विमृग्यते पुनःस्वात्मा बहिः कोशेषु पण्डितैः ॥ ∴.ब्रह्मानन्दरसास्वादतत्परेणैव चेतसा। समाधिनिष्ठितो भूत्वा तिष्ठ विद्वन् सदा मुने ॥ स ॥

(7) किं पठनीयं किं करणीयं सर्वं ब्रह्ममयं रे रे सर्वं ब्रह्ममयं समाधौ ॥ ब्र

(8) मुमुक्षा चतुर्विधा=(१) जन्मानेकसहस्रेषु तपसा आराधितेश्वरः। तेन निश्शेष निर्धूत हृदय स्थित कल्मषः। शास्त्रविद्-गुणदोषज्ञः भोग्यमात्रे विनिस्पृहः। नित्यानित्य पदार्थज्ञः मुक्तिकामो दृढव्रतः! निष्टप्तमग्निना पात्रमुद्धास्य त्वरया यथा। जहाति गेहं-तद्वच्च तीव्रमोक्षेच्छया द्विजः ॥ स एव सद्यस्तरति संसृतिं गुर्वनुग्रहात्। स जीवन्नेव मुच्यते ॥ जन्मान्तरे मध्यमस्तु तदन्यस्तु युगान्तरे। चतुर्थः कल्पकोट्यां वा नैव बन्धाद्विमुच्यते ॥ केते=

तापत्रयं तीव्रमवेक्ष्य वस्तु दृष्ट्वा कलत्रं तनयान्विहातुम् । मध्ये द्वयोः लोडनमात्मनो यत् सैषा मता माध्यमिका मुमुक्षा ॥

मोक्षस्य कालोऽस्ति किमद्य मे त्वरा । भुक्त्वैव भोगान् कृतसर्वकार्यः । मुक्त्यै यतिष्येऽहमथेति बुद्धिरेषैव मन्दा कथिता मुमुक्षा ॥ मार्गे प्रयातुर्मणिलाभवन्मे लभेत मोक्षो यदि तर्हि धन्यः । इत्याशया मूढधियां मतिर्या सैषातिमन्दाभिमता मुमुक्षा ॥ स ।

(9) **मोक्षेण कोवा लाभः तद्विहीनस्य प्रत्यवायः कः ? ॥**
आत्मलाभात्परो लाभो नान्यः कश्चन विद्यते । स परं ब्रह्माधिगच्छति । श्रु+9

कृतकृत्यश्च सिद्धश्च योगी ब्राह्मण एव च । य एवंवेद तत्वार्थं अन्यथा ह्यात्महा भवेत् ॥ नास्ति मृत्युभयं तस्य । तस्यात्मज्ञस्य शोच्याः स्युः ब्रह्मेन्द्रा अपीश्वराः ॥ अनेकजन्मान्तरसंचितैर्नरो विमुच्यते अज्ञान निमित्तपातकैः । इदं विदित्वा परमं हि पावनं न लिप्यते व्योम इवेह कर्मभिः ॥ उ । यल्लाभान्नापरो लाभो यत्सुखान्नापरं सुखं । यत् ज्ञानान्नापरं ज्ञानं तत् ब्रह्मेत्यवधारयेत् ॥ आ ।

(10) **स्वात्मा केन अपहृतः**—अविद्यावद्धचक्षुष्ट्वात् कामापहृतधीः सदा । विविक्तं दृश्यमात्मानं नेक्षते दशमं यथा ॥ उ । आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा । कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते । एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ गी । राहुग्रस्त दिवाकरेन्दु सदृशः मायासमाच्छादनात् ।

(11) जीवन्मुक्तस्य लक्षणम्

(1) सुषुप्तवत् जाग्रति यो न पश्यति द्वयन्तु पश्यन्नपि चाद्वयत्वतः। तथा च कुर्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चयः ॥ उ।=जाग्रन्निद्राविनिर्मुक्तः आहारादिषु सुप्तवत् ॥ श्रु

(2) उद्बोधितोपि कवले कवले जनन्या निद्राऽलसः शिशुरिवाविदितान्यभावः। आलोकयन्नपि दृशा जगदिन्द्र-जालं अन्तः कयापि कलया न परिच्युतोस्मि ॥ त्र ॥ बुधाः निर्मलदृष्टयोपि किंचिन्न पश्यन्ति जगत्समग्रम् ॥ शं

(3) अवस्थात्रयहीनात्मा ॥ यो जागर्ति सुषुप्तिस्थो यस्य जाग्रन्नविद्यते। यस्य निर्वासनो बोधः। स जीवन्मुक्त उच्यते ॥ ज्ञानिनो न शास्त्रे प्रवृत्तिः ॥ तुरीयः परमो हंसः साक्षान्नारायणो यतिः। श्रु ॥

(4) ब्रह्माकारतया सदास्थिततया निर्मुक्त बाह्यार्थधीः। अन्यावेदित भोग्य भोग कलितो निद्रालुवद्बालवत्। स्वप्नालोकित लोकवज्जगदिदं पश्यन्, क्वचिल्लब्ध धीरास्ते कश्चिदनन्तपुण्यफल — भुग्धन्यः स मान्यो भुवि ॥ ब्रह्मण्येव विलीनात्मा निर्विकारो विनिष्क्रियः ॥ वि।+16/4

(5) विज्ञातब्रह्मतत्वस्य यथापूर्वं न संसृतिः। अस्ति चेन्न स विज्ञाता ब्रह्मभावो बहिर्मुखः ॥ प्राचीनवासनावेगादसौ संसरतीति चेत्। न सदेकत्वविज्ञानान्मन्दीभवति वासना ॥ न तस्य मिथ्यार्थसमर्थनेच्छा। न संग्रहस्तज्जगतोपि दृष्टः। तत्रानुवृत्तिर्यदि चेन्मृषार्थे। न निद्रया मुक्त इतीष्यते ध्रुवम्। तद्वत्परे ब्रह्मणि वर्त-

मानः तदात्मना तिष्ठति नान्यदीक्षते । स्मृतिर्यथा स्वप्नविलोकितार्थे तथा विदः प्राशनमोचनादौ ॥ ∴ प्रारब्धसद्भाव कथा न युक्ता ।—स्वप्नार्थ सम्बन्धकथेव जाग्रतः ॥ वि

(6) या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ गी । + 78/7

(7) बोधो निर्वासनो यस्य-प्रपंचो विस्मृतप्रायः स जीवन्मुक्त उच्यते ॥ वि

(12) बन्धं च मोक्षं च मृषैव-मूढा—बुद्धेर्गुणं वस्तुनि कल्पयन्ति । दृगावृत्तिं मेघकृतां यथा रवौ ॥...अतस्तौ मायया क्लृप्तौ बन्धमोक्षौ न आत्मनि ॥ वि ।=राहुग्रस्त दिवाकर इन्दुवत् बुद्धेर्गुणं आत्मनि कल्पयन्ति ।=45/7

## (13) आत्मलक्षणम्

(1) अयमात्मा ब्रह्म । सत्यज्ञानानन्दमनन्तम् ॥ तदेतदिति मन्यन्ते अनिर्देश्यं परं सुखम् । तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् ॥ ओमिति ब्रह्म ॥ एकमेवाद्वयं ब्रह्म नेह नानास्ति किंचन ॥ श्रु

(2) प्रकाशोऽर्कस्य तोयस्य शैत्यं अग्नेर्यथोष्णता । स्वभावः सच्चिदानन्द नित्यनिर्मलतात्मनः ॥ आ

(3) जगद्विलक्षणं ब्रह्म ब्रह्मणोऽन्यन्न किंचन । ब्रह्मान्यत् भाति चेन्मिथ्या यथा मरुमरीचिका ॥ स

(4) तादृशमीदृशमेतावत्तावदिति च यन्नभवेत् । ब्रह्म तदित्यवधेयम् नो चेद्विषमो भवेत् परोक्षं च । स्वसंवेद्यं हि तत् ब्रह्म अयोगी नैव पश्यति ॥ लोकान्तरे वाऽत्र गुहान्तरे वा । तीर्थान्तरे कर्मपरं

परान्तरे । शास्त्रान्तरे नास्त्यनु पश्यतामिह। स्वयं परं ब्रह्म विचार्यमाणे ।। स । जात्यन्ध गजदृष्ट्येव कोटिशः परिकल्प्यते ।। यस्य -यै सन्निधिमात्रेण देहेन्द्रिय मनोधियः । विषयेषु स्वकीयेषु वर्तन्ते प्रेरिता इव ।। वि । नायं हन्ति न हन्यते=अविनाशी अयमात्मा । श्रु

## (14) अनात्मलक्षणम्

(1) रज्जुरूपे परिज्ञाते सर्पखण्डं न तिष्ठति । अधिष्ठाने तथा ज्ञाते प्रपंचः शून्यतां गतः ।। आ ।

(2) संसारः स्वप्नतुल्यो हि रागद्वेषादिसंकुलः । स्वकाले सत्यवत् भाति प्रबोधे सत्यसद् भवेत् ।। आ

(3) महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकंच पंच चेन्द्रियगोचराः ।। इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः । एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ।। गी

(4) महदादि देहपर्यन्तं विद्धि मरुमरीचिकाकल्पम् ।। वि

(5) किमिदं किमस्य रूपं कथमेतदभूदमुष्य को हेतुः । इति न कदापि विचिन्त्यं चिन्त्यं मायेति धीमता विश्वम् ।। व्यवहारस्य दशेयं विद्याऽविद्येति वेद परिभाषा । नास्त्येव तत्वदृष्ट्या तत्वं ब्रह्मैव नान्यदस्त्यस्मात् ।। शं

(6) दृक्ब्रह्म दृश्यं मायेति सर्व वेदान्त डिण्डिमः । करणत्रयसाध्यं यत् तन्मृषा तदसत्यतः ।। देहं प्राणमपीन्द्रियाण्यपि चलां बुद्धिं च शून्यं विदुः । स्त्रीबालान्ध जडोपमास्त्वहमिति भ्रान्ता भृशं वादिनः ।। शं

## (15) जीवः ईश्वरः ?

(1) अधिष्ठानं चिदाभासो बुद्धिरेतत्त्रयं यदा । अज्ञानादेकवत् भाति जीव इत्युच्यते तदा ॥ भावाऽभासो विशुद्धात्मा त्रयमेतन्महेश्वरः ॥ = प्रत्येकं न ईश्वरः–न जीवः । शं

(2) यथा कोशः तथा जीवः यथा जीवस्तथा शिवः । श्रु

(3) चेतने यदि अन्तःकरणमुपाधिः तदा साक्षी । यदि च विशेषणं तदा कर्ता भोक्ता जीव इति । अन्तःकरणं साक्षिणः उपाधिः । तद्वृत्तिचेतनमात्रं साक्षी । जीवे रागादिः नतु साक्षिणि । अन्तःकरणसहितं संसारी तद्रहितं साक्षी । ∵ क्लेशरहितः साक्षी । ? विशेष्यभागे न क्लेशः ।—किन्तु विशेषणे अन्तःकरणे । चेतने अन्तःकरण उपाधिद्वारा साक्षीति नाम=उपाधिं बिना न साक्षी ॥

(4) अवच्छिन्नः चिदाभासः तृतीयः स्वप्नकल्पितः । विज्ञेयः त्रिविधो जीवः तत्राद्यः पारमार्थिकः ॥ स । = जाग्रति व्यावहारिकः स्वप्ने प्रातिभासिकः द्वावपि अपारमार्थिकौ ॥

## (16) दृश्यप्रपंचलयमकृत्वा ( अहं ब्रह्मास्मि ब्रह्मैवेदं सर्वं ) इत्यादि उक्तिमात्रेण न मोक्षः

(1) अकृत्वा दृश्यविलयमज्ञात्वा तत्वमात्मनः । बाह्यशब्दैः कुतो मुक्तिः उक्तिमात्रफलैर्नृणाम् ॥ अकृत्वा शत्रुसंहारं अगत्वाऽखिलभूश्रियम् । राजाऽहमिति शब्दान्नो राजा भवितुमर्हति ॥ न गच्छति विना पानं व्याधिरौषधशब्दतः । विनाऽपरोक्षानुभवं ब्रह्मशब्दैर्न मुच्यते ॥ वि

(2) ब्रह्मविदोपदेशमननध्यानादिभिर्लभ्यते । मायाकार्य-तिरोहितं स्वममलं तत्वं न दुर्युक्तिभिः॥ दृश्यामहे सत्युपपद्यतेऽसौ सार्वात्म्यभावोऽस्य सदाऽत्मनिष्ठया ॥ वि

(3) दृश्ये स्फुटीभवति नेष्यत एव भूमा। भूम्नि स्फुटीभवति नेष्यत एव दृश्यम् ॥ ब्र

## (17) ब्रह्मवृत्तिरहित शास्त्रज्ञानेन न मोक्षः।

(1) ये तु वृत्तिं जहत्येनां ब्रह्माख्यां पावनीं पराम्। तेतु वृथैव जीवन्ति पशुभिश्च समा नराः॥ येतु वृत्तिं विजानन्ति ज्ञात्वापि — वर्धयन्ति ये। तेवै सत् ब्रह्मतां प्राप्ता नेतरे ब्रह्मवादिनः ॥ अ

(2) ब्रह्मैवास्मीति सद्वृत्या निरालंबतया स्थितिः। ध्यानशब्देन विख्याता परमानन्ददायिनी ॥ अ

(3) वीणाया रूपसौन्दर्यं तन्त्रीवादन सौष्ठवं। प्रजारञ्जनमात्रं तन्न साम्राज्याय युज्यते ॥ वाग्वैखरी शब्दझरी शास्त्रव्याख्यान-कौशलं। वैदुष्यम् विदुषां तद्वद्भुक्तये नतु मुक्तये ॥ वि

(4) अधीत्य चतुरो वेदान् धर्मशास्त्राण्यनेकशः। ब्रह्मतत्वं न जानाति दर्वी पाकरसं यथा ॥ श्रु

(5) ज्ञाननिष्ठो विरक्तोपि धर्मज्ञो विजितेन्द्रियः। विना देहेन योगेन न मोक्षं लभते विधे ॥ श्रु

## (18) ब्रह्मवृत्तिः का ? + फलंच

(1) ब्रह्मवृत्तिर्नाम ब्रह्माकारतया सूक्ष्मवृत्तिः अनुभववेद्या बुद्धि-मनोवृत्त्यतीता ॥

(2) ब्रह्मप्रणवः=अमात्रश्चतुर्थोऽव्यवहार्यः ।। श्रु

(3) विश्रान्तिमासाद्य तुरीयतल्पे । विश्वाद्यवस्था त्रितयोपरिस्थे । संविन्मयीं कामपि सर्वकालं । निद्रां सखे निर्विश निर्विकल्पाम् ।। शं

(4) नादानुसन्धान नमोस्तु तुभ्यं । त्वां साधनं तत्वपदस्य जाने । भवत्प्रसादात् पवनेन साकं विलीयते विष्णुपदे मनो मे ।। शं

(5) नादानुसन्धानपाटवात् सूक्ष्मनादविमर्शनेन देहविस्मृतिपूर्वकं चिदानन्दवृत्तिः अनुभूतये तद्ब्रह्मवृत्तिः ।।

(6) प्रभाशून्यं मनश्शून्यं बुद्धिशून्यं चिदात्मकम् । शं ।

(7) ब्रह्मवृत्या = प्रकाशमाने परमात्मभानौ नश्यत्यविद्यातिमिरे समस्ते । अहो बुधा निर्मलदृष्टयोपि किंचिन्न पश्यन्ति जगत्समग्रम् ।। शं ।=सर्वं ब्रह्मैव पश्यति=सहजनिष्ठा ।।

## (19) दृश्य प्रपंचस्य अग्रहणं समाधिना एव न अन्येन

(1) सर्वात्मना बन्धविमुक्तिहेतुः सर्वात्मभावान्न परोऽस्ति कश्चित् । दृश्याग्रहे सत्युपपद्यतेऽसौ सर्वात्मभावोऽस्य सदात्मनिष्ठया ।। सार्वात्म्यसिद्धये भिक्षोः कृतश्रवणकर्मणः । समाधिं विदधात्येषा शान्तो दान्त इति श्रुतिः ।। वि

(2) सविकल्पो निर्विकल्पः समाधिर्द्वाविमौ हृदि । मुमुक्षोर्यत्नतः कार्यौ विपरीत निवृत्तये ।। कृतेस्मिन् विपरीताया भावनाया निवर्तनम् । ज्ञानस्याप्रतिबद्धत्वं सदानन्दश्च सिध्यति ।। स

## (20) तस्माद्यतिः योगारूढत्वमासाद्य आत्मानमुद्धरेत्

(1) उद्धरेदात्मनात्मानं मग्नं संसारवारिधौ। योगारूढत्वमासाद्य सम्यग्दर्शननिष्ठया ॥ अतः समाधत्स्व यतेन्द्रियस्सन्। निरन्तरं शान्तमनाः प्रतीचि ॥ वि

(2) तस्मात् त्वंचाप्यप्रमत्तः समाधिं कुर्वन् साधु निर्द्वन्द्व युक्तः। नित्यं ब्रह्मानन्द पीयूष सिन्धौ मज्जन् क्रीडन् मोदमानो रमस्व ॥ स तस्माद्योगी भवार्जुन। स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा ॥ गी।

## (21) आत्मसमाधिरहिताः पारोक्ष्यकथाभिधायिनः

(1) समाहिता ये प्रविलाप्य बाह्यं श्रोत्रादि चेतः स्वमहं चिदात्मनि। त एव मुक्ता भवपाशबन्धैः नान्ये तु पारोक्ष्यकथाभिधायिनः ॥ वि

(2) कुशला ब्रह्मवार्तायां वृत्तिहीनाः सुरागिणः। तेप्यज्ञानतमा नूनं पुनरायान्ति यान्ति च ॥ अ

(3) पक्कं मनो ब्रह्मणि लीयते यदा। तदा समाधिः सविकल्पवर्जितः स्वतोऽद्वयानन्द रसानुभावकः ॥ वि

## (22) कृतश्रवण कर्मणां सन्यासिनां सर्वात्मसिद्धये समाधिर्विधीयते

(1) सर्वात्मसिद्धये भिक्षोः कृतश्रवणकर्मणः। समाधिं विदधात्येषा शान्तो दान्त इति श्रुतिः ॥ वि

(2) शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येत् ॥ श्र

(3) अज्ञान हृदयग्रंथे र्निश्शेषविलयस्तदा । समाधिनाऽविकल्पेन यदाऽद्वैतात्मदर्शनम् ।। वि

(4) अस्मिन् समाधौ कुरुते प्रयासम् । यस्तस्य नैवास्ति पुनर्विकल्पः । सर्वात्मभावोप्यमुनैव सिध्येत् । सर्वात्मभावः खलु केवलत्वम् ।। स

(5) आप्तोक्ति खननं तथोपरि शिलाद्युत्कर्षणं स्वीकृतिं । निक्षेपः समपेक्षते नहि बहिः शब्दैस्तु निर्गच्छति । तद्वत् ब्रह्मविदोपदेश मनन ध्यानादिभिर्लभ्यते । मायाकार्यतिरोहितं स्वममलं तत्वं न दुर्युक्तिभिः ।। वि

## (23) परमहंसस्य योगाभ्यास एव राजमार्गः

(1) योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ।। सन

(2) श्रद्धाभक्ति ध्यान योगान्मुमुक्षोः मुक्तेर्हेतून्वक्ति साक्षाच्छ्रुतेर्गीः । यो वा एतेष्वेव तिष्ठत्यमुष्य मोक्षोऽविद्याकल्पितात् देहबन्धात् ।। वि

(3) सार्वात्म्यसिद्धये भिक्षोः कृतश्रवणकर्मणः । समाधिं विदधात्येषा शान्तो दान्त इति श्रुतिः ।। वि

(4) यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् । यतन्तोप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ।। गी

(5)...पारमहंस्येन योगाभ्यासो राजमार्गः । एतमेव प्रव्राजिनो लोकमिच्छंतः प्रव्रजन्ति । तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽत्मन्येवात्मानं पश्येत् ।। श्रु

## (24) योगाभ्यासरहितशास्त्रज्ञानेन वा महावाक्यावर्तनेन वा न मोक्षः ॥=16

(1) ( एतेन योगः प्रत्युक्तः—इति ) ब्रह्मसूत्रं । अत्र योगः = पातञ्जलयोगः इति भाष्यवचनम् । राजयोगः ह-ठ-योगो वा न निराकृतः भगवत्पादैः ॥ अन्यत्सर्वं = 16 ॥

## (25) आत्मसाक्षात्कारः कथं लभ्यते

(1) बाह्ये निरुद्धे मनसः प्रसन्नता मनःप्रसादे परमात्मदर्शनम् । तस्मिन् सुदृष्टे भवबन्धनाशो बहिर्निरोधः पदवी विमुक्तेः । विं

(२) शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत् । श्रद्धा भक्ति ध्यान योगादवैहि । कश्चित् धीरः प्रत्यगात्मानमैच्छत् आवृत्तचक्षुरमृतत्वमिच्छन् ॥ श्रु

(3) वेदान्तश्रवणं कुर्यात् मननं चोपपत्तिभिः । योगेनाभ्यसनं नित्यं ततो दर्शनमात्मनः ॥ स

(4) अत्यन्तकौशलेन समाहितचेतसा युक्तः आत्मानं पश्येत् ॥ शं

(5) यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् । यततोऽप्यकृतात्मानो नैनं पश्यन्त्य चेतसः ॥ गी

(6) योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ सन

(7) आत्मन्येवाखिलं सर्वं प्रविलाप्य धिया सुधीः । भावयेदेक-

मात्मानम् निर्मलाकाशवत् सदा ।। परिपूर्णचिदानन्द स्वरूपेणा-
वतिष्ठते ।। आ

(8) एवमात्माऽरणौ ध्यानमथने सततं कृते । उदितावगति ज्वाला सर्वाज्ञानेन्धनं दहेत् ।। आ । तस्य वागमोघा ।।

(9) नादानुसन्धान नमोस्तु तुभ्यं त्वां साधनं तत्वपदस्य जाने । भवत्प्रसादात् पवनेन साकं विलीयते विष्णुपदे मनो मे ।। नादानुसन्धान समाधिमेकं मन्यामहे मान्यतमं लयानाम् ।। शं

(10) अमात्रोऽनन्त मात्रश्च द्वैतस्योपशमः शिवः । ओंकारो विदितो येन स मुनिर्नेतरो जनः ।। गौ । मननान्मुनिरुच्यते ।

(11) नास्ति नादात्परो मन्त्रो न देवः स्वात्मनः परः ।। ध्वनेरन्तर्गतं ज्योतिः ज्योतिरन्तर्गतं मनः । तन्मनो विलयं याति तद्विष्णोः परमं पदम् ।। नादकोटि सहस्राणि बिन्दुकोटि शतानिच । सर्वे तत्र लयं यान्ति ब्रह्म प्रणवनादके ।। श्रु । = निर्विकल्पसमाधौ लयं ।

(12) विषयोपरमात् चित्तनैश्चल्येन च प्राणायामेन शरीरनाडीषु विशोधितासु अनाहतनादः श्रूयते । तेन अन्नमयप्राणमये शुद्धे ज्योतिर्दर्शनं तेन मनोमये शुद्धे विज्ञानदीपं । अनन्तरं समाधावेव मनोलयः ततः आत्मदर्शनं=तुरीयः = ब्रह्मप्रणवः = ब्रह्मवृत्तिः = अनन्तमात्रः = समाधिः = प्रज्ञानं=विज्ञानं = निर्विकल्पम् =3/3+6

## (26) आत्मतत्वस्य अतीव सूक्ष्मत्वात् समाधिना ज्ञातव्यम्

(1) अतीव सूक्ष्मं परमात्मतत्वं न स्थूलदृष्टया प्रतिपत्तुमर्हति । समाधिनाऽत्यन्त सुसूक्ष्मवृत्या ज्ञातव्यमार्यैरति शुद्धबुद्धिभिः ।। वि

(2) दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ श्रु —

(3) स्वसंवेद्यं हि तत् ब्रह्म अयोगी नैव पश्यति। योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ सन

(4) समाधिना साधु विनिश्चलात्मना। निश्चित्य तत्वं निजबोध दृष्ट्या निस्संशयं सम्यगवेक्षितश्चेत् । श्रुतः पदार्थो न पुनर्विकल्पते ॥ वि

## (27) निर्विकल्पसमाधिना अहंकारनाशः वासनानाशः कर्मनाशः आत्मलाभः सार्वात्म्यसिद्धिश्च ।

(1) आरूढशक्तेरहमो विनाशः कर्तुं न शक्यः सहसाऽपि — पण्डितैः । ये निर्विकल्पाख्यसमाधिनिश्चलाः तानन्तराऽनन्तभवाहि वासनाः ॥ वि

(2) बाह्ये निरुद्धे मनसः प्रसन्नता। मनःप्रसादे परमात्मदर्शनम्। तस्मिन् सुदृष्टे भवबन्धनाशो । बहिर्निरोधः पदवी — विमुक्तेः ॥ वि

(3) सार्वात्म्यसिद्धये भिक्षोः कृत श्रवण कर्मणः । समाधिं विदधात्येषा शान्तो दान्त इति श्रुतिः ॥ अज्ञानहृदयग्रन्थेर्निश्शेषविलयस्तदा । समाधिनाऽविकल्पेन यदाऽद्वैतात्मदर्शनम् ॥ समाधिनाऽनेन समस्तवासनाग्रन्थेर्विनाशोऽखिलकर्म नाशः । अन्तर्बहिः सर्वत एव सर्वदा स्वरूप विस्फूर्तिरयत्नतः स्यात् ॥ निर्विकल्पसमाधिना स्फुटं ब्रह्मतत्वमवगम्यते ध्रुवम् । नान्यथा चलतया मनोगतेः प्रत्ययान्तरविमिश्रितं भवेत् ॥ वि

(4) समाधिना नश्यति कर्मबन्धो । ब्रह्मात्मबोधोऽप्रतिबन्ध इष्यते ॥स

## (28) समाधिः कदा सिद्ध्यति—कथम्

(1) वेदान्तश्रवणं कुर्यात् मननं चोपपत्तिभिः । योगेनाभ्यसनं नित्यं ततो दर्शनमात्मनः ॥ स

(2) आत्मन्येवाखिलं सर्वं प्रविलाप्य धिया सुधीः । भावयेदेकमात्मानं निर्मलाकाशवत् सदा ॥ एवमात्माऽरणौ ध्यानमथने सततं कृते । उदितावगति ज्वाला सर्वाज्ञानेन्धनं दहेत् ॥ आ

(3) मनसा मन आलोक्य स्वयमात्मा प्रकाशते । आत्मनि – स्वप्रकाशाग्नौ चित्तमेकाहुतिं क्षिपेत् ॥ शं

(4) देहेन्द्रियप्राणमनोऽहमादिभिः । स्वाज्ञानक्लृप्तैरखिलैरुपाधिभिः । विमुक्तमात्मानमखण्डरूपं पूर्णं महाकाशमिवावलोकयेत् ॥ नियमितमनसाऽमुं त्वं स्वमात्मानमात्मन्ययमहमिति साक्षाद्विद्धि बुद्धिप्रसादात् ॥ विशुद्धमन्तःकरणं स्वरूपे निवेश्य साक्षिण्यवबोधमात्रे । शनैश्शनैर्निश्चलतामुपानयन् पूर्णं स्वमेवानुविलोकयेत्ततः ॥ वि

(5) वृत्तिशून्यं मनः कृत्वा क्षेत्रज्ञं परमात्मनि । एकी कृत्य विमुच्येत योगोऽयं मुख्य उच्यते ॥ श्रु = 21/4

(6) ब्रह्मवृत्त्या हि पूर्णत्वं तथा पूर्णत्वमभ्यसेत् ॥ अ = 18/7

(7) निरन्तराभ्यासवशात्तदित्थं पक्वं मनो ब्रह्मणि लीयते यदा । तदा समाधिः सविकल्पवर्जितः । स्वतोऽद्वयानन्दरसानुभावकः ॥ वि

(8) देहाभिमाने गलिते विज्ञाते परमात्मनि। यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ शं

(9) श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला। समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ गी = निर्विकल्पसमाधिम् ॥

## (29) ब्रह्मानुभवः कदा सिद्ध्यति–कथम्

(1) लीयते हि सुषुप्ते तन्निगृहीतं न लीयते। तदेव निर्भयं ब्रह्म ज्ञानालोकं समन्ततः ॥ गौ

(2) एकं द्वित्रिक्षणेष्वेवं विकल्पस्य निरोधनम्। क्रमेणाभ्यस्यतां यत्नात् ब्रह्मानुभवकाङ्क्षिभिः। निर्विकल्पकचैतन्यं स्पष्टं तावद्विभासते ॥ संकल्पं वर्जयेत्तस्मात् सर्वानर्थस्य कारणम्। शं

(3) अन्यथा ग्रहणः स्वप्नो निद्रा तत्वमजानतः। विपर्यासे — तयोः क्षीणे तुरीयं पदमश्नुते ॥ गौ

(4) मनस्थं मनमध्यस्थं मध्यस्थं मनवर्जितम्। मनसा मन आलोक्य स्वयं सिद्ध्यति योगिनः ॥ उ-गी

(5) नादकलातीतं सूक्ष्मनादं विमर्शेत्। निःशब्दं तत्वमित्याहुः अनिर्वाच्यं–परं पदम् ॥ शं । + 25|12

## (30) कथं अभ्यासः कर्तव्यः। प्रथमाभ्यासश्च

(1) योगस्य प्रथमं द्वारं वाङ्निरोधोऽपरिग्रहः। निराशा च निरीहा च नित्यमेकान्तशीलता ॥ वाचं नियच्छात्मनि तं नियच्छ बुद्धौ धियं यच्छ च बुद्धिसाक्षिणि। तं चापि पूर्णात्मनि निर्विकल्पे विलाप्य शान्तिं परमां भजस्व ॥ देहेन्द्रियप्राणमनोऽहमादिभिः।

स्वाज्ञानक्लृप्तैरखिलैरुपाधिभिः । विमुक्तमात्मानमखण्डबोधं । पूर्णं महाकाशमिवावलोकयेत् ॥ समाधिना साधु विनिश्चलात्मना । पश्यात्मतत्वं स्फुटबोधचक्षुषा । निस्संशयं सम्यगवेक्षितश्चेत् । श्रुतः पदार्थो न पुनर्विकल्प्यते ॥ तमो द्वाभ्यां रजः सत्वात् सत्वं शुद्धेन नश्यति । तस्मात्सत्वमवष्टभ्य स्वाध्यासापनयं कुरु ॥ वि ॥ आहार – व्यवहारादिषु सर्वत्र सत्वम् प्रथमतः अभ्यसेत् /

(2) इमं चाकृत्रिमानंदं तावत्साधु समभ्यसेत् । वश्यो यावत् क्षणात् पुंसः प्रयुक्तः सन् भवेत्स्वयम् ॥ ततः साधननिर्मुक्तः सिद्धो भवति योगिराट् ॥ भावितं तीव्रवेगेन यद्वस्तु निश्चयात्मना । पुमान् तद्धि भवेच्छीघ्रम् ज्ञेयं भ्रमरकीटवत् ॥ परिपक्वं मनो येषां केवलोऽयं च सिद्धिदः । कंचित्पक्वकषायाणां हठयोगेन संयुतः ॥ अङ्गानां समतां विद्यात् समे ब्रह्मणि लीयते । नो चेन्नैव समानत्वं ऋजुत्वं शुष्कवृक्षवत् ॥ अ

(3) अभक्ष्य भक्षणाच्चित्तं अशुद्धं भवति स्वतः । अलं तेषां तु विज्ञानं दूरे दूरे पलायते ॥ सूत

(4) आपातवैराग्यवतो मुमुक्षून् भवाब्धिपारं प्रति यातुमुद्यतान् । आशाग्रहो मज्जयतेऽन्तराले निगृह्य कण्ठे विनिवर्त्य वेगात् ॥ वि

(5) बुद्धया विशुद्धया युक्तो धृत्यात्मानं नियम्यच । शब्दादीन् विषयान् त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ विविक्तसेवी लघ्वाशी यतवाक्कायमानसः । ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ।

अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम्। विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ गी 18/50

(6) बुद्धौ प्रलीने मनसि प्रचिन्त्या। विद्या हि सा ब्रह्मचर्येण लभ्या ॥ सन

(7) ब्रह्मवृत्याहि पूर्णत्वं तथा पूर्णत्वमभ्यसेत्। येषां वृत्तिः समा वृद्धा परिपक्वाच सा पुनः। तेवै सद्ब्रह्मतां प्राप्ताः नेतरे ब्रह्म-वादिनः ॥ अ

(8) सविकल्पसमाधिं यो दीर्घकालं निरन्तरम्। संस्कारपूर्वकं कुर्यान्निर्विकल्पाऽस्य सिध्द्यति ॥ स

(9) नात्यश्नतस्तु योगोस्ति नचैकान्तमनश्नतः। न चातिस्वप्न-शीलस्य जाग्रतो नैव चार्जुन ॥ गी

(10) गच्छन् तिष्ठन् सदाकालं वायुस्वीकरणं परम्। सर्व-कालप्रयोगेन सहस्रायुर्भवेन्नरः ॥ उगी ।=मनःप्रसादकारणं च

(11) इन्द्रियाणां निरोधेन देहे पश्यन्ति मानवाः। देहे नष्टे कुतो बुद्धिः बुद्धिनाशे कुतोज्ञता ॥ तावदेव निरोधः स्यात् यावत्तत्वं न विन्दति। विदिते तु परे तत्वे एक एवानुपश्यति ॥ श्र + 31/4

(12) यावत् क्षणं क्षणार्धं स्वरूप परिचिन्तनं क्रियते। तावत् दक्षिणकर्णे त्वनाहतः श्रूयते शब्दः ॥ सिद्ध्यारंभस्थिरताविश्रम वि-श्वासबीजबुद्धीनाम्। उपलक्षणं हि मनसः परमं नादानुसन्धानम् ॥ नादानुसन्धान नमोस्तु तुभ्यं। त्वां साधनं तत्वपदस्य जाने। भव-त्प्रसादात् पवनेन साकम्। विलीयते विष्णुपदे मनो मे ॥ शं

(13) नारण्यसंश्रयाद्योगो न नानाग्रन्थवेदनात्। न दानैर्न व्रतैर्वापि न तपोभिर्नवा मखैः। न च पद्मासनाद्योगो न च नासाग्रवीक्षणात्। न शौचेन न मौनेन न मन्त्राराधनैरपि॥ अभियोगात् सदाऽभ्यासात् तत्रैव च विनिश्चयात्। पुनः पुनरनिर्वेदात् सिद्ध्येद्योगो न चान्यथा॥ आत्मक्रीडस्य सततं सदात्ममिथुनस्य च। आत्मनैव सुतृप्तस्य योगसिद्धिर्न दूरतः॥ योदी॥

(14) यतो यतो निश्चरति मनश्चंचलमस्थिरम्। ततस्ततो नियम्यैतत् आत्मन्येव वशं नयेत्॥ वशेहि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता॥ गी=प्रथमभूमिः वाङ्निरोधः—निर्मनस्त्वं द्वितीया–अहंकारराहित्यं तृतीया।=योगफलानि

(15) केवलद्वैतविस्मरणं न समाधिः किन्तु चिदात्मनाऽवस्थानम्॥=सत्यज्ञानानन्दमनन्तम्=श्रु

(16) जिह्वोपस्थपरित्यागे पृथिव्यां किं प्रयोजनम्। जितं सर्वं जिते रसे॥ श्रु। मौनं आहारनियमश्च रसवर्ज्यं।

(17) वासनाक्षयविज्ञान मनोनाशा समकालं चिराभ्यस्ता फलदा मताः। एकैकशः न सिद्धिं प्रयच्छन्ति॥∴त्रयमेव समाश्रय॥ श्रु

## (31) अभ्यासदेशः आसनं देहरक्षणं च

(1) शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः। नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम्॥ गी

(2) अभ्यसेत् सततं योगं यदा युक्ततमोहि सः। तप्तः श्रान्तो व्याकुलो वा क्षुधितो व्यग्रचित्तकः। कालेऽतिशीतेऽत्युष्णे वा अनिला-

ग्न्यंबुसमाकुले। सध्वनावति जीर्णे गोःस्थाने साग्नौ जलान्तिके। — कूपकूले श्मशाने च नद्यां भित्तौ च मर्मरे। चैत्ये सवल्मिके देशे पिशाचादिसमावृते। नाभ्यसेत् योगविद्योगं। योगध्यानपरायणः। स्मृतिलोपश्च मूकत्वं बाधिर्यं मन्दता ज्वरः। जडता जायते सद्यो दोषाऽज्ञानाद्धि योगिनः। एते दोषाः परित्याज्या योगाभ्यसन-शालिना। अनादरे हि चैतेषां स्मृतिलोपादयो ध्रुवम्॥ (गणेश। गीता) ध्यानस्यच विधिः।

(3) विविक्तदेश आसीनो विरागो विजितेन्द्रियः। भावये-देकमात्मानं तमनन्तमनन्यधीः। अल्पाहारो यदि भवेत्-अग्निर्देहं हरेत् क्षणात्।∴.49+30/11=अन्नेन प्राणाः प्राणैर्मनो मनसश्च विज्ञानं विज्ञानेनात्मानं वेदयति॥ श्रु।= अन्नमाश्रित्य तिष्ठन्ति पञ्चकोशाः॥

(4) शरीरपोषणार्थी सन् य आत्मानं दिदृक्षति। ग्राहं दारु-धिया धृत्वा नदीं तर्तुं स गच्छति॥ वि।∴.30/3–4=पोषणं निषिध्यते– इन्द्रियपाटवेन रक्षणं जी·मु–पर्यन्तं विधीयते ?॥ — जन्तूनां नरजन्म दुर्लभं अतः पुंस्त्वं ततो विप्रता। लब्ध्वा कथंचि-न्नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनं। यस्त्वात्ममुक्तौ न यतेत मूढधीः–सह्यात्महा स्वं विनिहन्त्यसद्ग्रहात्॥ सततविमल- जढ मल बोधानन्दरूपं समेत्य,त्यज जडरूपोपाधिमेतं सुदूरे। अथ पुन-रपि नैष स्मर्यताम्॥ वि। +30/11। देहो देवालयः न अत्यंत-मुपतापयेत्-श्रु॥

(5) महता पुण्यपण्येन क्रीतेऽयं कायनौस्त्वया। पारं

दुःखोदधेर्गन्तुम् तर यावन्न भिद्यते ॥ शरीरं न अत्यन्तमुपताप-येत्—श्रु

(6) इह चेदवेदीदथ सत्यमस्ति—न चेदिहावेदीन्महती विनष्टिः । श्रु

(7) शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः । नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ गी । सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्मचिन्तनं । आसनं तद्विजानीयान्नेतरत् सुखनाशनम् ॥ अ

## (32) तीव्र वैराग्य पूर्ववासनात्यागः भावनाशक्तिः ज्ञानाभ्यासश्च योगी दृढमभ्यसेत्

(1) अत्यन्तवैराग्यवतः समाधिः । समाहितस्यैव दृढप्रबोधः । प्रबुद्धतत्वस्यहि बन्धमुक्तिः । मुक्तात्मनो नित्यसुखानुभूतिः ॥ वैराग्यबोधौ पुरुषस्य पक्षिवत् । पक्षौ विजानीहि विचक्षण त्वम् । विमुक्तिसौधाग्रलताऽधिरोहणम् ताभ्यां विना नान्यतरेण सिध्यति ॥ अन्तस्त्यागो बहिस्त्यागो विरक्तस्यैव युज्यते । त्यजत्यन्तर्बहिः सङ्गं विरक्तस्तु मुमुक्षया ॥ बहिस्तु विषयैः संगं तथाऽन्तरहमादिभिः । विरक्त एव शक्नोति त्यक्तुं ब्रह्मणि निष्ठितः ॥∴ वैराग्यान्न परं सुखस्य जनकं पश्यामि वश्यात्मनः । तच्चेच्छुद्धतरात्मबोधसहितं साम्राज्यस्वाराज्यधुक् । वि

(2) वासनावृद्धितः कार्यं कार्यवृध्या च वासना । वर्धते सर्वथा पुंसः संसारो न निवर्तते ॥ संसारबन्धनिर्मुक्त्यै तद् द्वयं प्रदहेद्यतिः ॥ सद्वासनास्फूर्तिविजृम्भणे सत्यसौ विलीनाऽप्यहमादिवासना । अतिप्रकृष्टा प्यरुणप्रभायां विलीयते साधु यथा तमिस्रा ॥ वि

(3) अन्तरङ्ग विहीनस्य कृतश्रवणकोटयः। न फलन्ति यथा योद्धुरधीरस्याऽस्त्रसंपदः ॥ शमादिषट्कं जिज्ञासोरवश्यं भाव्य-मान्तरम्। निजानन्दे स्पृहा नान्ये वैराग्यस्यावधिर्मता ॥ स

(4) भावनया भाव्यस्य लाभः ॥ जाति नीति कुल गोत्र दूर-गम्। नाम रूप गुण दोष वर्जितम्। देशकाल विषयातिवर्ति, यत्। ब्रह्म तत्वमसि भावयात्मनि ॥ यत्परं सकल राग गोचरं विमल बोधचक्षुषः। शुद्धचिद्घनमनादिवस्तु यत् ब्रह्मतत्वमसि भावयात्मनि ॥ उक्तमर्थमिममात्मनि स्वयं भावय प्रथित युक्ति-भिर्धिया। संशयादिरहितं करांबुवत्नि तत्वनिगमो भविष्यति ॥ सर्वोपाधिविनिर्मुक्तं सच्चिदानन्दमद्वयम्। भावयात्मानमात्मस्थम् न भूयः कल्पसेऽध्वने ॥ वि + 30/2

(5) नास्ति बुद्धिरयुक्तस्य नचायुक्तस्य भावना। नचाभाव-यतः शान्तिः अशान्तस्य कुतः सुखम् ॥ गी

(6) भावश्रीं भावनामयीं साधयेत् ॥ श्रु

(7) वासनाऽनुदयो भोग्ये वैराग्यस्य परोऽवधिः। अहं भावा-दया भावा बोधस्य परमोऽवधिः ॥ वि

(4) यथा खरश्चन्दनभारवाही भारस्य वेत्ता नतु चन्दनस्य। तथैव शास्त्राणि बहून्यधीत्य सारं न जानन् खरवद्वहेत्सः ॥

## (33) सर्वप्रयत्नेन स्वेनैव यत्नः कर्तव्यः

(1) तस्मात्सर्वप्रयत्नेन भवबन्धविमुक्तये। स्वैरेव यत्नः कर्तव्यो रोगादाविव पण्डितैः ॥ वस्तुस्वरूपं स्फुटबोधचक्षुषा।

स्वेनैव वेद्यं नतु पण्डितेन ॥ अविद्या कामकर्मादि पाशबन्धं विमोचितुम् । कः शक्नुयाद्विनात्मानं कल्पकोटिशतैरपि ॥ वि

(2) उद्धरेदात्मना आत्मानं नात्मानमवसादयेत् । आत्मैव ह्यात्मनो बन्धुः आत्मैव रिपुरात्मनः ॥ गी

(3) परमात्मपदप्राप्तौ नोपकुर्वन्ति कश्चन ॥ स

(4) ∴ उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत ॥ नचेदिहावेदीन्महती विनष्टिः ॥ श्रु । ?=पुनः पुनः जन्ममरणदुःखं ।

(5) हरिरस्तूपदेष्टा ते हरोवा कमलोद्भवः । तथापि न तव स्वास्थ्यं सर्व विस्मरणादृते ॥ शं ।=गुरुवचनात् श्रुतिप्रमाणात् स्वस्य युक्त्या च समाधिसिद्धिः ॥

## (34) योगी त्वरया उन्मनीभावं अभ्यसेत्-उपायाश्च

(1) अभ्यसेदुन्मनीभावं मुमुक्षुः त्वरयाऽनिशम् ॥ निराधारा निर्विकारा या दशा सोन्मनी स्मृता ॥ स ।=ब्रह्मत्वम्

(2) नाद एव लये श्रेष्ठः अवस्थासु मनोन्मनी । विचरत्यखिलान् लोकान् बालोन्मत्तपिशाचवत् ॥ निश्चिन्तमानो मृतवत् स तिष्ठन् ॥ सर्वेन्द्रियगुणरहितावस्था = सहजावस्था । यद्येकोपि भवति स एव नित्यपूतस्थः । श्रु ॥

(3) उन्मन्यवस्थाधिगमाय विद्वन् । उपायमेकं तव निर्दिशामः । पश्यन्नुदासीनतया प्रपंचं । संकल्पमुन्मूलय सावधानः ॥ शं ।= चित्तनाशः

(4) तत्स्वरूपं न चैतस्य विषयो मनसो गिराम् ॥ अ ।=अपार सुखानुभवः ।

(5) यस्माद्वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् नबिभेति कुतश्चनेति ॥ श्रु

## (35) निश्चित्य राजयोगे प्रवृत्तस्य विद्वत्सन्यासिनः अज्ञानमूलाः संशयाः नश्यन्ति—अयोगी नैव आत्मानं पश्यति

(1) एवमात्माऽरणौ ध्यानमथने सततं कृते । उदितावगति ज्वाला सर्वाज्ञानेन्धनं दहेत् ॥ आ । = ध्यानोदित समाधिर्नाम ज्ञानेन । थ

(2) प्रकाशमाने परमात्मभानौ नश्यत्यविद्यातिमिरे समस्ते । अहो बुधा निर्मलदृष्टयोपि किंचिन्न पश्यन्ति जगत्समग्रम् ॥ शं .= समाधिना = 18/7 —

(3) योगाङ्गानुष्ठानादशुद्धिक्षयं ज्ञानदीप्तिराविवेकख्यातेः ॥ सू=25/12

(4) स्वसंवेद्यं हि तद्ब्रह्म अयोगी नैव पश्यति । योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ सन

(5) यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् । यतन्तोप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ गी =योगरहिताः शास्त्रज्ञाः नैव पश्यन्ति

(6) अयोगी नैव पश्यति ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः— क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ श्रु

## (36) ब्रह्मवृत्तिः श्रवणमात्रेण जायते वा किंवा क्रियान्तरमपेक्षते । = 18/7

(1) मुख्य गौणादि भेदेन विद्यन्तेऽत्राधिकारिणः । तेषां प्रज्ञा-

नुसारेण अखण्डा वृत्तिरुदेष्यते ॥ श्रद्धाभक्तिपुरस्सरेण विहितेनैवेश्वरं कर्मणा । सन्तोष्यार्जित तत्प्रसाद महिमा जन्मान्तरेष्वेव यः ॥ नित्यानित्यविवेक तीव्रविरति न्यासादिभिः साधनैः-। युक्तः सः श्रवणे सतामभिमतो मुख्याधिकारी द्विजः ॥

अध्यारोपापवादक्रममनुसरता देशिकेनात्र वेत्रा । वाक्यार्थे बोध्यमाने सति सपदि सतः शुद्धबुद्धेरमुष्य । नित्यानन्दाद्वितीयं निरुपममलं यत् परं तत्वमेकम् । तद् ब्रह्मैवाहमस्मीत्युदयति परमाखण्डताकारवृत्तिः ॥ प्रज्ञामान्द्यं भवेद्येषां तेषां न श्रुतिमात्रतः। स्यादखण्डाकारवृत्तिः विनातु मननादिना ॥ श्रवणान् मननात् ध्यानात् तात्पर्येण निरन्तरम् । बुद्धेः सूक्ष्मत्वमायाति ततो वस्तूपलभ्यते ॥ मन्दप्रज्ञावतां तस्मात् करणीयं पुनः पुनः । श्रवणं मननं ध्यानं सम्यग्वस्तूपलब्धये ॥ स । = 25/12

(2) ज्ञाननिष्ठा = राजयोगः = ब्रह्मवृत्तिः = ज्ञानसमाधिः=सम्यग्ज्ञानम् ॥

(3) नचधीर्देहशिरस्मीति यद्याभासो न चेतसि । युष्मदस्मद्विभागज्ञे स्यादर्थवदिदं वचः ॥ उ।∴चित्तो ह्यादर्शवत्तस्माच्छुद्धे विद्या प्रकाशते यमैर्नित्यैश्च यज्ञैश्च तपोभिस्तस्य शोधनम् ॥ उ।—प्राणायामशमदमाद्यैः ।

## (37) भ्रमर-कीटन्यायः योगिनामेव न इतरेषाम्

(1) क्रियान्तरासक्तिमपास्य कीटको ध्यायन्यथाऽलिं ह्यलिभावमृच्छति, तथैव योगी परमात्मतत्वं ध्यात्वा समायाति तदेकनिष्ठया ॥ वि

(2) जीवन्मुक्तस्तु तद्विद्वान् पूर्वोपाधिगुणान् त्यजेत्। स सच्चिदादिधर्मत्वं भेजे भ्रमरकीटवत् ॥ आ ।=समाधिना देहादिवासनाः त्यजेत् ।

(3 योगमभ्यस्यतो भिक्षोः योगाच्चलितमानसः। प्राप्य पुण्यकृतान् लोकानित्यादि प्राह केशवः ॥ नतु कृत्वैव सन्यासं तूष्णीमेव मृतस्यहि । पुण्यलोकगतिं ब्रूते भगवान् न्यासमात्रतः ॥ स

(4) प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः। शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ अथवा योगिनामेव कुले भवति धीमताम् ॥ एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ गी ।=स्वरूपं ज्ञातुमिच्छन् योगमार्गे प्रवृत्तः सन्यासी योगभ्रष्टः वेदोक्तकर्मानुष्ठानफलं अपाकरिष्यति ॥ गी भा

**(38) योगमार्गं दुष्करं इत्यधैर्यं त्यक्त्वा योगरतो भव ।१ योगे प्रवृत्तानामपि महत्फलत्वात् । ब्रह्माहमिति वेदने न नियमाः ।**

(1) देवदत्तोऽहमित्येतद्विज्ञानं निरपेक्षकम्। तद्वद्, ब्रह्मविदोप्यस्य ब्रह्माहमिति वेदनम् ॥ वि

(2) एकान्तसन्निहितमीदृशमात्मतत्वम्। लोका विमूढमतयो बत नाद्रियन्ते । आकाशगोचरमशेषजगत्प्रकाशं घूका न भास्करमुदीक्षितुमुत्सहन्ते ॥ ब्र

(3) न दृष्टि लक्ष्याणि न चित्तबन्धो न देशकालौ नच वायुरोधः । न धारणा ध्यानसमाधयो वा समेधमाने सति राजयोगे ॥

गच्छंस्तिष्ठन्नुपविशन् शयानो वाऽन्यथापि वा । यथेच्छया वसेद्विद्वान्नात्मारामः सदा मुनिः ॥ न देशं नापिवा कालं न शुद्धिं वाप्यपेक्षते ॥ शं

(4) अदैन्यभैक्षमशनं-वस्त्रं क्षालनशोषणादिरहितं-दिग्वास्तुशय्यामहि-दिगंबरं वा साम्बरो वा चरत्यवन्याम् ॥ वि

(5) योगे प्रवृत्तस्यापि महत्फलत्वात् योगरतो भव ॥=37/4

## (39) समाधेः पूर्वं जगद्विलापनक्रमः

(1) समाधिकालात्प्रागेवं विचिन्त्यातिप्रयत्नतः । स्थूलसूक्ष्मक्रमात्सर्वं चिदात्मनि विलापयेत् ॥ अकारं पुरुषं विश्वं उकारे प्रविलापयेत् । उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत् ॥ मकारं कारणं प्राज्ञम् चिदात्मनि विलापयेत् । चिदात्माऽहं नित्यशुद्ध बुद्धमुक्तः सदव्ययः । ज्ञात्वा विवेचकं चित्तं चिदात्मनि विलापयेत् ॥ चिदात्मनि विलीनं चेत् तच्चित्तं नैव चालयेत् । पूर्णबोधात्मना आसीत पूर्णाचलसमुद्रवत् ॥ एवं समाहितो योगी श्रद्धाभक्ति समन्वितः । जितेन्द्रियो जितक्रोधो पश्येदात्मानमव्ययम् ॥ यः पश्येत् सर्वगं शान्तं आनन्दात्मानमव्ययम् । न तेन किंचिदाप्तव्यं ज्ञातव्यं वाऽवशिष्यते । कृतकृत्यो भवेद्विद्वान् जीवन्मुक्तो भवेत्तदा ॥ श्रु+शं

(2) वाचं नियच्छात्मनि तन्नियच्छ बुद्धौ धियं यच्छच बुद्धिसाक्षिणि ॥ तं चापि पूर्णात्मनि निर्विकल्पे विलाप्य शान्तिं परमां भजस्व ॥ वि

(3) चित्तमूलो विकल्पोऽयं चित्ताभावे न कश्चन । अतश्चित्तं समाधेहि प्रत्यग्रूपे परात्मनि ॥ वि ।=योगाग्नौ चित्तदहनं ।

(4) दृष्ट्वा बाह्यं निमील्याथ स्मृत्वा तत्प्रविहाय च। अथोन्मील्यात्मनो दृष्टिं ब्रह्म प्राप्नोत्यनध्वगः। उ=सद्यो मोक्षः-न अर्चिरादिमार्गेण।

## (40) समाधौ अनुभवाः

(1) किमपि सततबोधं केवलानन्दरूपम्। निरुपममतिवेलं नित्यमुक्तं निरीहम्। निरवधि गगनाभं निष्कलं निर्विकल्पम्। हृदि-कलयति विद्वान् ब्रह्म पूर्णं समाधौ॥ वि

(2) समाहिन्तान्तःकरणस्वरूपे विलोक्यात्मानमखण्डवैभवम्। वि

(3) अन्तः पूर्णो वहिः पूर्णः पूर्णकुम्भ इवार्णवे। अन्तः शून्यो वहिः शून्यः शून्यकुम्भ इवांबरे॥ श्रु

(4) आनन्दाम्बुधिमग्नोऽसौ देही तत्र न दृश्यते॥ श्रु

(5) निश्वासलोपैः निभृतैः शरीरैः नेत्राम्बुजैरर्धनिमीलितैश्च। आविर्भवन्तीं अमनस्कमुद्रां आलोकयामो मुनिपुंगवानाम्॥ अमी यमीन्द्राः सहजामनस्कात्। अहंममत्वे शिथिलायमाने। ब्रह्म दर्शनं। शं

## (41) समाधेः उत्थितस्य अनुभवोक्तिः

इति गुरुवचनात् श्रुतिप्रमाणात् परमवगम्य स तत्वमात्मयुक्त्या। समाधिमकरोत्॥

(1) कञ्चित्कालं समाधाय परे ब्रह्मणि मानसम्। व्युत्थाय परमानन्दात् इदं वचनमब्रवीत्॥

बुद्धि र्विनष्टा गलिता प्रवृत्तिः ब्रह्मात्मनोरेकतयाधिगत्या । इदं न जानेऽप्यनिदं न जाने किंवा कियद्वा सुखमस्त्यपारम् ॥ न किंचिदत्र पश्यामि न शृणोमि न वेद्म्यहं । स्वात्मनैव सदानन्दरूपेणास्मि विलक्षणः ॥ वि

(2) रूपवर्णादिकं सर्वं विहाय परमार्थवित् । परिपूर्णचिदानन्दस्वरूपेणावतिष्ठते ॥ आ

(3) चित्तं विनष्टं यदि भासितं स्यात् तत्र प्रतीतो मरुतोपि नाशः। नचेद्यदि स्यान्नतु तस्य शास्त्रं नात्मप्रतीतिः न गुरुर्न मोक्षः ॥

बहिर्गतेपि प्रपञ्चमिथ्यात्व भानम् = सहजनिष्ठा ॥ श्रु । = सः जीवन्मुक्तः ।

## (42) तत्वदृष्ट्या जगन्नास्ति

(1) असत्कल्पो विकल्पोऽयं विश्वमित्येकवस्तुनि । निर्विकारे निराकारे निर्विशेषे भिदा कुतः ॥ नह्यस्ति विश्वं परतत्वबोधात् सदात्मनि ब्रह्मणि निर्विकल्पे । कालत्रये नाप्यहिरीक्षितो गुणे । नह्यम्बुविन्दुः मृगतृष्णिकायाम् ॥ मायामात्रमिदं द्वैतं अद्वैतं परमार्थतः । इति ब्रूते श्रुतिः साक्षात् सुषुप्तावनुभूयते ॥ वि

(2) चित्तमूलो विकल्पोऽयं चित्ताभावे न कश्चन । अतश्चित्तं समाधेहि प्रत्यग्रूपे परात्मनि ॥ वि । अयं=प्रपंचः

(3) आपाततः प्रतिभया जगदस्ति वादः सत्यं निरूपणविधौ नहि किंचिदस्ति । शिरो विभाति परितस्तिमिरं पिशाचः तत्रैव दीपकलिकानयने किमस्ति ॥ शुक्तौ यद्वद्रजतमयत्वं रज्जौ यद्वत् फणिदेहत्वं तद्वत्जीवत्वम् ब्रह्मणि तद्वत् जीवत्वम् । ब्र॥ गी— = 14

## (43) योग एव जीवन्मुक्तिसाधनम्

(1) जीवन्मुक्ति प्रकारस्य योग एव नचान्यथा। स एव सिद्धिदः सम्यक् सर्वदर्शन संमतः ॥ यो । + 39/1-4

(2) लक्ष्यालक्ष्यगतिं त्यक्त्वा यस्तिष्ठेत्केवलात्मना। शिव एव स्वयं साक्षादयं ब्रह्मविदुत्तमः ॥ संसिद्धस्य फलं त्वेतत् जीवन्मुक्तस्य योगिनः। बहिरन्तः सदाऽऽनन्दरसास्वादनमात्मनि ॥ वि

(3) तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥ तुरीयः परमो हंसः साक्षान्नारायणो यतिः ॥ श्रु

## (44) मोक्षंप्रति महान्यत्नः कर्तव्यः—नोचेत् महती विनष्टिः।

(1) इह चेदवेदीदथ सत्यमस्ति नचेदिहावेदीन्महती विनष्टिः॥ देहान्ते किं भवेज्जन्म तन्न जानन्ति मानवाः ॥ श्रु ॥ महता पुण्य पण्येन क्रीतेयं कायनौस्त्वया। पारं दुःखोदधेर्गन्तुं तर यावन्न भिद्यते ॥ लब्ध्वा कथंचिन्नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपार दर्शनं। यस्त्वात्ममुक्तौ न यतेत मूढधीः सह्यात्महा स्वं विनिहन्त्यसद्ग्रहात् ॥ नरजन्म दुर्लभं ततो विप्रता ततोप्यात्मानात्मविवेचनम् ॥ वि = पूर्वार्जितं महत्पुण्यं क्रयं दत्वा मनुष्यत्वं ततोप्यधिकक्रयं विप्रत्वं। कथंचित् तदपि प्राप्य यः देहे विषयादिषु अनात्मसु आत्मेति बुद्ध्या मुह्यति स आत्महा। ? मनुष्यजन्म भविष्यतीति न निश्चयः। पुण्यपापानुरूपत्वात् जन्मनः ॥ ( व्यर्थं समस्तं यदि—चेन्न मोक्षः = शं )

(2) कर्मयोगेन भक्तियोगेन च मोक्षश्चेत्—सोपि सालोक्यादिः

महान्यत्नेन प्राप्य पुनरावर्तन्ते=12/1 ( ? ते तं भुक्त्वा पुण्यलोकं विशालं। क्षीणे पुण्ये मर्त्यलोकं विशन्ति। श्रु )

(3) कैवल्यमुक्तिस्तु = 12/2 ॥ मुमुक्षा चतुर्विधा=12/8 ॥ तस्मिन् साधन चतुष्टयसंपन्नस्यैव अधिकारः न इतरेषां। तदस्माकं दुस्साध्यमिति न भेतव्यं-स्वात्मा शुद्धचित्ते प्रकाशते-अभ्यास वैराग्याभ्यां शुद्धिः ॥

(4) पापबाहुल्यात् जन्ममरणदुःखमेव केषांचित् सुखमिव भाति। ( ते तु वृथैव जीवन्ति पशुभिश्च समा नराः। तेषामेषां विशेषः कः वृत्तिर्येषां तु तैः समा ॥ शं ) आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ गी ॥∴मनुष्यत्वं सफलं कुरु । = 68/11

(5) कथं संसार मोह निवारणं ? सन्यासेनैव। तत्प्राप्तौ गृहसाध्य स्थाश्रमे सघनाभ्यासः ? भक्त्या भज गोविन्दं मूढमते–स्वकर्मयोगः–श्रद्धा भक्तिः परोपकारत्वं सत्संगं सर्वमपि मुक्तौ लक्ष्यत्वेन करणीयम् ॥ पापंतु परपीडनं परदूषणं शास्त्रदूषणं यतिदूषणं निषिद्धाशा विषयेषु मोहं कामक्रोध लोभादयः=यत्र लोभः तत्र पूर्वपूर्वं सर्वसद्भावः ॥ एवं दैवीसंपत्तिर्नाम पुण्याचरणेन मुक्तिमार्गः। असुरसंपत्तिर्नाम पापाचरणेन नरकमार्गः—इति शास्त्रदृष्टः ॥

(6) भारो अनात्मविदो वपुः 68/11 = मोक्षे यत्नं नोचेत् मनुष्यत्वं बहु शास्त्रज्ञान सहितमपि व्यर्थमेव ॥ शं ॥

## (45) सप्तभूमिकाः ।=श्रु + शं

(1) ज्ञानभूमिः शुभेच्छा स्यात् प्रथमा समुदीरिता। विचारणा-

द्वितीयातु तृतीया तनुमानसि ।। सत्त्वापत्तिः चतुर्थी स्यात् ततोऽ- संसक्तिनामिका । पदार्थाऽभावना षष्ठी सप्तमी तुर्यगा स्मृता ।।

(2) स्थितः किंमूढ एवास्मि प्रेक्ष्योऽहं शास्त्रसज्जनैः । वैराग्यपूर्व इच्छेति शुभेच्छा चोच्यते बुधैः । शास्त्रसज्जनसंपर्क वैराग्याभ्यास- पूर्वकम् । सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ।। विचारणा- शुभेच्छाभ्यां इन्द्रियार्थेष्वरक्तता । यत्र सा तनुतामेति प्रोच्यते तनु- मानसी ।। भूमिकात्रितयाऽभ्यासात् चित्तेऽर्थविरतेर्वशात् । सत्त्वा- त्मनि स्थिते शुद्धे सत्त्वापत्तिरुदाहृता ।। दशाचतुष्टयाभ्यासात् असंसर्गफलातु या । रूढसत्त्वचमत्कारा प्रोक्ताऽसंसक्तिनामिका ।। भूमिका पंचकाभ्यासात् स्वात्मारामतया भृशम् । आभ्यन्तराणां बाह्यानां पदार्थानामभावनात् । परप्रयुक्तेन चिरप्रयत्नेनावबोध- नम् । पदार्थाऽभावना नाम षष्ठी भवति भूमिका ।। षड्भूमिका चिराभ्यासात् भेदस्यानुपलंभनात् । यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः ।।

(3) इदंममेति सर्वेषु दृश्यभावेष्वभावना । जाग्रत् जाग्रदिति प्राहुर्महान्तो ब्रह्मवित्तमाः ।। विदित्वा सच्चिदानन्दे मयि दृश्य परंप- राम् । नामरूपपरित्यागो जाग्रत् स्वप्नः समीर्यते ।। परिपूर्णचिदा- काशे मयि बोधात्मतां विना । न किंचिदन्यदस्तीति जाग्रत् सुप्तिः समीर्यते ।।

(4) मूलाऽज्ञान विनाशेन करणाभासचेष्टितैः । बन्धो नमेऽति स्वल्पोपि स्वप्न जाग्रदितीर्यते ।। कारणाऽज्ञान नाशाद्यत् द्रष्टृदर्शन दृश्यता । नकार्यमस्ति तत् ज्ञानं स्वप्नः स्वप्नः समीर्यते ।। अति-

सूक्ष्म विमर्शेन स्वधीवृत्तिरचञ्चला। विलीयते यदा बोधे स्वप्न-सुप्तिरितीर्यते ॥

(5) चिन्मयाकारमतयो धीवृत्ति प्रसरैर्गतः। आनन्दानुभवो विद्वन् सुप्तिजाग्रदितीर्यते ॥ वृत्तौ चिरानुभूतान्तरानन्दानुभव स्थितौ। समात्मतां यो यात्येष सुप्तिस्वप्न इतीर्यते ॥ दृश्य धीवृ-त्तिरेतस्य केवलीभावभावना। परं बोधैकताऽवाप्तिः सुप्तिः सुप्ति-रितीर्यते ॥

(6) परब्रह्मवदाभाति निर्विकारैकरूपिणी। सर्वावस्थासु धारैका तुर्याख्या परिकीर्तिता ॥ शुभेच्छादित्रयं भूमि भेदाभेदयुतं स्मृतम्। अद्वैते स्थैर्यमायाते द्वैतेच प्रशमं गते। पश्यन्ति स्वप्नवल्लोकं तुर्यभूमि-सुयोगतः ॥ पंचमीं भूमिमारुह्य सुषुप्तिपदनामिकाम्। शान्ताऽशेष-विशेषांशाः तिष्ठेदद्वैतमात्रके ॥ अन्तर्मुखतया नित्यं षष्ठीं भूमिमुपा-श्रितः। परिश्रान्ततया गाढनिद्रालुरिव लक्ष्यते ॥ कुर्वन्नभ्यासमेतस्यां भूम्यां सम्यक् विवासनः ॥

(7) तुर्यावस्थां सप्तभूमिं क्रमात्प्राप्नोति योगिराट् ॥ विदेहमु-क्तिरेवात्र तुर्यातीतदशोच्यते ॥ यस्य देहादिकं नास्ति यस्य ब्रह्मेति निश्चयः। परमानन्दपूर्णो यः सजीवन्मुक्त उच्यते ॥ श्रु + शं

## (46) श्रवण मनन निदिध्यासनानां स्वरूपं कालावधिश्च

(1) वाक्यार्थ विचारः श्रवणम्। एकान्तेन श्रवणार्थानु-

संन्धानं मननम् । श्रवणं मनन निर्विचिकित्सेऽर्थे वस्तुन्येकतान वत्तया चेतस्थापनं निदिध्यासनम् ।। श्रु

(2) सर्व वेदान्त वाक्यानां पड्भिर्लिंगैः सदद्वये । परे ब्रह्मणि तात्पर्यनिश्चयं श्रवणं विदुः ।। मननं तच्छ्रुतार्थस्य साक्षात्करणकारणम् । विजातीय शरीरादिप्रत्यय त्यागपूर्वकं । सजातीयात्मवृत्तीनां प्रवाहकरणं यथा । तैलधारावदच्छिन्नवृत्त्या तत् ध्यानमिष्यते ।। स ।। ध्यानं = निदिध्यासनं ।।

(3) तावत्कालं प्रयत्नेन कर्तव्यं श्रवणं सदा । प्रमाणसंशयो यावत् स्वबुद्धेर्न निवर्तते ।। प्रमेयसंशयो यावत् तावत्तु श्रुतियुक्तिभिः । आत्मयाथार्थ्यनिश्चित्यै कर्तव्यं मननं मुहुः । विपरीवात्मधीर्यावत् न विनश्यति चेतसि । तावन्निरन्तरं ध्यानं कर्तव्यं मोक्षमिच्छता ।। स

(4) यावन्न तर्केण निरासितोपि दृश्य प्रपंचस्त्वपरोक्षबोधात् । विलीयते तावदमुष्य भिक्षोः ध्यानादि सम्यक्करणीयमेव ।। स

(5) श्रवणं तु गुरोः पूर्वं मननं तदनन्तरम् । निदिध्यासनमित्येतत् पूर्णबोधस्य कारणम् ।। श्रु

(6) ज्ञाननिष्ठा तत्परस्य नैव कर्मोपयुज्यते । कर्मणो ज्ञानिष्ठाया न सिध्यति सहस्थितिः ।। परस्परविरुद्धत्वात् तयोर्भिन्नस्वभावयोः ।। तस्मात् क्रियान्तरं त्यक्त्वा ज्ञाननिष्ठापरो यतिः । सदाऽऽत्मनिष्ठया तिष्ठेत् निश्चलः तत्परायणः ।। स । = न अनुष्ठानं जपं श्रवणं वा कर्तव्यं ।

(7) ज्ञाननिष्ठा कथं कार्या ? ।। गी 18/51 (= बुद्ध्या-

विशुद्धया युक्तः...)=मायारहितबुध्या युक्तः धैर्येण कार्यकरण-संघातं वशीकृत्य शब्दस्पर्शादीन् विषयान् त्यक्त्वा गुहादि विविक्तदेशे लघ्वशनशीलः वाक्कायमनश्च संयम्य एवं उपरतसर्वकरणः यतिः आत्मनि एकाग्रीकरणं परत्वेन कर्तव्यं-मन्त्र जपादि अन्यत् न कर्तव्यं-अहं मम वर्जितः शान्तः उपरतः यतिः=ज्ञाननिष्ठः ब्रह्मभवनाय समर्थो भवति। गीभा

## (47) योगे प्रवृत्तस्य स्नान शौच अनुष्ठानादि विधिः

(1) ज्ञानैकनिष्ठानिरतस्य भिक्षोः नैवावकाशोऽस्ति हि कर्मतन्त्रे। तदेव कर्माऽस्य तदेव सन्ध्या तदेव सर्वं न ततोऽन्यदस्ति॥ बुद्धिकल्पित मालिन्यक्षालनं स्नानमात्मनः। तेनैव शुद्धिरेतस्य न मृदा न जलेन च॥ स्व स्वरूपे मनस्थानं अनुष्ठानं तदिष्यते। करणत्रयसाध्यं यत् तन्मृषा तदसत्यतः। तस्मात् क्रियान्तरं त्यक्त्वा ज्ञाननिष्ठापरो यतिः। सदाऽऽत्मनिष्ठया तिष्ठेन्निश्चलस्तत्परायणः॥

(2) कर्तव्यं स्वोचितं कर्म योगमारोढुमिच्छता। आरोहणं कुर्वतस्तु कर्म न आरोहणं मतम्॥

(3) प्रत्यङ्मुखानां शौचंतु मुख्यमान्तरमिष्यते। असङ्गोहमिति ज्ञात्वा शौचमेतत्प्रचक्षते॥ स

(4) योगं समारोहति यो मुमुक्षुः क्रियान्तरं तस्य न युक्तमीषत्। क्रियान्तरासक्तमनाः पतत्यसौ ताल द्रुमारोहणकर्तृवद् ध्रुवम्॥ स।=( देहरक्षणक्रियां विना )।

(5) भूतभौतिकरूपाणां विशुद्धिर्ब्रह्मभावनात्॥ परमहंसानां मानसं स्नानं। श्रु

(6) वर्जयेद् दुर्जनः प्रान्तं वह्नि स्त्री पथि सेवनम् । प्रातस्नानोपवासादि कायक्लेश विधिं तथा ॥ श्रु

## (48) भिक्षाटनादिसमये कथं अभ्यासिनां स्थितिः

(1) यथा समाधि त्रितयं यत्नेन क्रियते हृदि । तथैव बाह्यदेशेपि कार्यं द्वैतनिवृत्तये ॥ = नामरूपं परित्यज्य ब्रह्माकारेण चिन्तयेत ॥ स

(2) प्रमादोऽत्र न कर्तव्यः विदुषा मोक्षमिच्छता । सर्वात्मभावेऽप्यमुनैव सिध्येत् ॥ स

(3) विषयेष्वात्मतां दृष्ट्वा मनसश्चिति मज्जनं । प्रत्याहारः स विज्ञेयोऽभ्यसनीयो मुमुक्षुभि ॥ अ

## (49) योगाभ्यासिनां आहारनियमः

(1) पुष्टं सुमधुरं स्निग्धं गव्यं धातुप्रपोषणम् । मनोऽभिलक्षितं योग्यं योगी भोजनमाचरेत् । द्वौ भागौ पूरयेदन्नैः तोयेनैकं प्रपूरयेत । वायोः संचरणार्थाय चतुर्थमवशेषयेत् ॥ श्रु

(2) नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः । न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ गी

(3) न अन्नदोषेण मस्करी । श्रु = मधुकरवृत्तौ न अन्नदोषः ।

(4) त्यक्त सर्वेषणस्यास्य शरीर स्थितिसिद्धये । द्रव्यादिसंग्रहे प्राप्ते भिक्षा भिक्षोर्विधीयते ॥ श्रु

## (50) अपरिपक्वमानसानां ह-ठ-योगेन संयुत राजयोगेन सिद्धिः

(1) परिपक्वं मनो येषां केवलोऽयं च सिद्धिदः । कंचित्पक्व-

कषायाणां ह-ठयोगेन संयुतः। अङ्गानां समतां विद्यात्समे ब्रह्मणि लीयते। नोचेन्नैव समानत्वं ऋजुत्वं शुष्कवृक्षवत् ।। अ

(2) विषमविषयमार्गैर्गच्छतोऽनच्छबुद्धेः । प्रतिपदमभियातो मृत्युरप्येष सिद्धः। हित सुजन गुरूक्त्या गच्छतः स्वस्वयुक्त्या प्रभवति फलसिद्धिः सत्यमित्येव विद्धि ।। वि

साध (3) यस्य राजयोगस्य सघनं ह-ठ-योग इहोच्यते ।। यो ।= प्राणायामेन नाडिशोधनं चित्तनिरोधं च ।

## (51) योगारोहणात्पूर्वं स्नान शौच अनुष्ठान जपादयो ये विहिताः श्रद्धया अनुष्ठेयाः ।

(1) विधिना यः परित्यागः स सन्यासः सतां मतः । न्यासेनहि सर्वेषां श्रुत्या प्रोक्तो विकर्मणां त्यागः ।।.˙.वेदान्तश्रवणं कुर्यात् मननं चोपपत्तिभिः । योगेनाभ्यसनं नित्यं ततो दर्शनमात्मनः ॥ स

(2) तच्चिन्तनं तत् कथनं अन्योन्यं तत्प्रबोधनं। एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ।। ब्रह्मचर्यमहिंसा च दया भूतेष्ववक्रता। विषयेष्वतिवैतृष्ण्यं शौचं दंभविवर्जनं। सत्यं निर्मलता स्थैर्यं अभिमानविवर्जनम्। ईश्वरध्यानपरता ब्रह्मविद्भिः सहस्थितिः। ज्ञान-शास्त्रैकपरता समता सुखदुःखयोः । मानानासक्तिरेकान्तशीलता च मुमुक्षुता। यस्यैतद्विद्यते सर्वं तस्य चित्तं प्रसीदति। नत्वेतद्धर्म शून्यस्य प्रकारान्तरकोटिभिः ।। स

(3) ब्रह्मचर्यं =स्मरणं दर्शनं स्त्रीणां गुणकर्मानुकीर्तनं। समी-

चीनत्वधीस्तासु प्रीतिः संभाषणं मिथः । सहवासश्च संसर्गोऽष्टधा मैथुनं विदुः ।। स

(4) ये चान्ये धर्माः श्रुतिस्मृति विहिताः गुरूपदिष्टाश्च श्रद्धया अनुष्ठेयाः ।। विविदिषोः न उपदेशार्हत्वम् ।। श्रु

(5) कथं तत्ज्ञानप्राप्तिः ।। = तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनः तत्वदर्शिनः ।। गी ।=ज्ञानवन्तोपि केचित् न तत्वदर्शिनः । तत्वदर्शिभिः उपदिष्टं ज्ञानं कार्यक्षमं भवति न इतरत् इति भगवतो मतम् ।। गी भा

(6) दण्डविषयं = 66

(7) न त्यजेच्चेद्यतिर्मुक्तो यो माधूकरमातरं । वैराग्य जनकं श्रद्धा कलत्रं ज्ञान नन्दनम् ।। श्रु

(8) चित्ते ह्यादर्शवत्तस्मात् शुद्धे विद्या प्रकाशते । यमैर्नित्यैश्च यज्ञैश्च तपोभिस्तस्य शोधनम् । शरीरादितपः कुर्यात्तद्विशुध्यर्थं मुत्तमम् । देहविशोषणं च ।। उ

## (52) चित्तनिरोधः मनोनाशश्च कथं सिद्ध्यति

(1) अध्यात्मविद्याऽधिगमः साधुसंगम एवच । वासना संपरित्यागः प्राणस्पन्दनिरोधनम् ।। एतास्ता युक्तयः पुष्टाः सन्ति चित्तजये किल । सतीष्वेतासु युक्तीषु ह ठा-न्नियमयन्ति ये । चेतस्ते दीपमुत्सृज्य विनिघ्नन्ति तमोऽञ्जनैः ।। श्रु

(2) दुष्कराभ्यासयोगेन महाऽयासेन किं फलं । क्षणेन लभ्यते ब्रह्म सद्गुरोरवलोकनात् । यो ।। = गुरोः ज्ञानोपदशेन ।

(3) ज्ञानयोगं परित्यज्य बाह्ये ये रमते नरः । स मूढः काञ्चनं त्यक्त्वा लोष्ठं गृह्णाति सुव्रत ॥

∴ हठान्नियमितमपि चित्तं पुनरुद्भवति । ∴ ज्ञानं च योगं च मुमुक्षुर्दृढमभ्यसेत् ॥ श्रु

(4) असंयतात्मना योगो दुष्प्राप इति मे मतिः । वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ गी

(5) यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् । ततस्ततो नियम्यैतत् आत्मन्येव वशं नयेत् ॥ गी ॥ येषु येषु पदार्थेषु मनो मज्जति बालवत् । तेभ्यस्तेभ्यः समाहृत्य तद्धि तत्वे नियोजयेत् ॥ श्रु

(6) आहारशुद्धौ सत्व शुद्धिः । सत्व शुद्धौ ध्रुवा स्मृतिः ॥= सत्वं = मनः ॥ अभक्ष्यभक्षणाच्चित्तं अशुद्धं भवति स्वतः । अलं तेषां तु विज्ञानं दूरे दूरे पलायते ॥ सूत

– 7 (8) वाचं नियच्छात्मनि तन्नियच्छ बुद्धौ धियं यच्छ च बुद्धिसाक्षिणि । तंचापि पूर्णात्मनि निर्विकल्पे विलाप्य शान्तिं परमां भजस्व ॥ वि

– (8) चित्तं विनष्टं यदि भासितं स्यात् तत्र प्रतीतो मरुतोपि नाशः । नचेद्यदिस्यान्नतु तस्य शास्त्रं नात्मप्रतीतिः न गुरुर्न मोक्षः ॥ श्रु । ∴ प्रयत्नेन मुमुक्षुणा चित्तलयः कार्यः ॥ + 53

## (53) शमादिषट्कंप्रति विचारणा

– (1) प्राच्योदीच्याङ्ग सद्भावे शमः सिध्यति नान्यथा । तीव्रा विरक्तिः प्राच्यांगं उदीच्यांगं शमादयः ॥ शमादिषट्क विहीनस्य श्रवणकोटयः न फलन्ति । अविरक्तस्य सन्यासो निष्फलः ॥ स

(2)वैराग्यस्य फलं बोधो बोधस्योपरतिः फलम् । स्वानन्दानु भवात् शान्तिः एषै वोपरतेः फलम् ॥ यद्युत्तरोत्तरा भावः पूर्वं पूर्वं तु निष्फलम् । दृष्टदुःखेष्वनुद्वेगः विद्यायाः प्रस्तुतं फलम् ॥ विद्याफलं स्यादसतो निवृत्तिः । प्रवृत्तिरज्ञानफलं तदीक्षितं । तज्ज्ञाज्ञयोर्यन्मृ-गतृष्णिकादौ । नोचेद्विदां दृष्टफलं किमस्मात् ॥ वि

(3) शमः = चित्तशान्तिः त्रिविधा । ? उत्तमा = स्वविकारं परित्यज्य वस्तुमात्रतया स्थितिः = ब्रह्मनिर्वाणलक्ष्णा ॥

प्रत्यक्प्रत्ययसन्तानकरणं धियः = मध्यमा शान्तिः = शुद्धसत्व-प्रधाना ध्यानकाले वर्तते ॥ मिश्रसत्वं जघनं = विषयव्यावृत्तिं त्यक्त्वा श्रवणादौ प्रवृत्तिः । तस्यैव मनःप्रसादः स्वात्मैक चिन्तनं विहितं ॥ स

(4) बाह्येन्द्रिय वृत्तिनिग्रहः दमः = दण्डनं = मनःप्रसादकारणं तपः ॥

(5) कर्मादौ तत्साधने च दोषदर्शनपूर्वकंघृणा = उपरतिः = विहितकर्मणां विधिना परित्यागः = सन्यासः ॥

(6) रक्षा = तितिक्षा कवचीकृत्य योगसिद्धिः/ साधनेष्वपि सर्वेषु तितिक्षा उत्तमसाधनम् । यत्र विघ्नाः पलायन्ते दैविका अपि भौतिकाः । सहनं सर्वदुःखानां अप्रतीकारपूर्वकं ॥ चिन्ता विलाप रहितं सा तितिक्षा निगद्यते ॥ वि । मोक्षे सुदृढा बुद्धिः मुमुक्षुता ॥

(7) शास्त्रस्य गुरुवाक्यास्य सत्यबुध्यवधारणं = श्रद्धा ॥ स्वस्व-रूपानुसन्धानं भक्तिः । तदेव प्रथमभूमौ आनन्दबाष्प रोमाञ्चलि

सहितं अनन्तरं ध्येयाकारेण तन्मयत्वम् = स्वरूपानुसन्धानम् ॥= भावना । नचायुक्तस्य भावना = गी

(8) समाधानं=शब्दादिभ्यो निगृह्य श्रवणादौ योजनं—अभ्यास पाटवात् शुद्धे ब्रह्मणि बुद्धेः स्थापनं नाम निदिध्यासनम् । ननु चित्त-स्य लालनम् ॥=मनोबुद्ध्यादीनां वशीकृत्य ब्रह्मणि स्थापनम् ॥

(9) कर्तव्यमङ्गहीनं चेत् प्रधानं नैवसिध्यति ॥ वैराग्यं च मुमुक्षुत्वं तीव्रं यस्यतु विद्यते । तस्मिन्नेवार्थवन्तः स्युः फलवन्तः शमादयः ॥ एतयोर्मन्दता यत्र विरक्तत्व मुमुक्षुयोः । मरौ सलिल-वत्तत्र शमादेर्भासमात्रता ॥ मन्दमध्यमरूपापि । वैराग्येणशमा-दिना । प्रसादेन गुरोः सेयं । प्रवृद्धा सूयते फलम् ॥ वि ।∴गुरु-पदिष्टमार्गेण विविदिषायां पतन भीरुतया भवितव्यम् ॥

## (54) कर्मयोग हठयोग राजयोग सांख्ययोग पातञ्जल इतरयोगानां विवरणम्

(1) कर्म एव योगः कर्मयोगः=ईश्वरार्पणबुद्ध्या अनुष्ठीयमानं घटनरूपं योगार्थत्वात् योग इत्युच्यते ॥ भा । तेषां चित्तशुद्धि द्वारा मुक्तिहेतुत्वम् ॥ ?—कर्मणा शुद्धचित्तस्य संसृतेर्दोषदर्शनम् । ततो विरक्तिः संसारात् मोक्षेच्छा जायते ततः ॥ सूत

(2) हठयोगः=हठः केवलकुंभाख्योऽमनस्मृतः ; वायुनिरोधेन मनोनिरोधः । योगी स्थाणुत्वमाप्नोति ततो वायुं निरोधयेत् । सर्व-कालनिरोधेन सहस्रायुर्भवेन्नरः । श्रु ।=शरीरेन्द्रिय सौष्ठवेन राज-

योगस्य अंगम् ।। राजयोगमजानन्तः केवलं हठधर्मिणः । तेषामभ्यासिनां मन्ये श्रमोहि केवलं फलम् ॥ योदी

(3) तार्किकाणान्तु जीवेशौ वाच्यावेतौ विदुर्बुधाः । लक्ष्यं च सांख्य योगाभ्यां वेदान्तैरैक्यता तयोः ॥ स ।

(4) राजयोगः=अस्मिन् ग्रन्थे यदुच्यते=ब्रह्मवृत्तिः । येषां वृत्तिः समावृद्धा परिपक्वाच सापुनः । तेवै सद्ब्रह्मतां प्राप्ता नेतरे ब्रह्मवादिनः ॥ अ

नदृष्टिलक्ष्याणि न चित्तबन्धो न देशकालौ नच वायुरोधः । न धारणा ध्यान समाधयोवा समेधमाने सति राजयोगे ॥ अशेषदृश्यो ज्झितदृङ्मयानां अवस्थितानामिह राजयोगे । न दृश्यते कश्चिदयं विकल्पः सा जृम्भते केवल संविदेव ।। प्रकाशमाने परमात्मभानौ नश्यत्यविद्या तिमिरे समस्ते । अहो बुधा निर्मलदृष्टयोपि किंचिन्न पश्यन्ति जगत्समग्रम् ।। शं

(5) सांख्य योगः=इमे सत्वरजस्तमांसि गुणाः मया दृश्याः । अहं तेभ्यो अन्यः तद्व्यापारसाक्षिभूतः नित्यः गुणविलक्षणः आत्मा इति चिन्तनं सांख्ययोगः ।। गीभा

(6) पातञ्जलयोगः=योगांगानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिः । सत्वपुरुषयोः सिद्धिसाम्ये कैवल्यम् । प्रकृतिः कर्त्री पुरुषः पुष्करपलाशवत् निर्लेपः ।

(7) कर्मशास्त्रे कुतो ज्ञानं तर्के नैवास्ति निश्चयः । सांख्ययोगौ भिदापन्नौ शाब्दिकाः शब्दतत्पराः । अन्ये पाषण्डिनः सर्वे ज्ञानवार्ता सुदुर्लभाः । एकं वेदान्त विज्ञानं स्वानुभूत्या विराजते ॥ शं

एवं ज्ञातवतोः फलं ?=अहं ब्रह्मेति विज्ञानात् कल्पकोटिशता-
र्जितम् । सञ्चितं विलयं याति प्रबोधात् स्वप्नकर्मवत् ।। वि

(8) कथं वेषधारिणः ?=भ्रमन्ति ज्ञानिवल्लोके भ्रामयन्ति
जनानपि । जटाभाराजिनैर्युक्ताः दांभिका वेषधारिणः ।। स

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः । दंभाहंकारसंयुक्ताः
कामरागबलान्विताः । कर्षयन्तःशरीरस्थं भूतग्राममचेतसः ।
मांचैवान्तः शरीरस्थं तान्विद्धयासुरानिश्चयान् ।। गी

(9) तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा
शास्त्रविधानोक्तं कर्मकर्तुमिहार्हसि ।। गी ।∵विधिं ज्ञात्वा धर्म-
माचरेत् ।

∴8/4=अंशद्वयवति निगमे साधयति द्वैतमेक एवांशः
अद्वैतमेव वस्तु प्रतिपादयति प्रसिद्धमपरोंशः ।। अद्वैतं निजरूपं
तस्मिन् द्वैतं न सत्य मध्यस्तं । यत्र प्रयोजनं स्यात्प्रतिपादयति श्रुति-
स्तदेवासौ ।। शं

## (55) दिने दिने ध्यानफलम्

(1) बोधेशनैरुपचयं प्रतिपद्यमाने । विच्छिद्यते हृदि तथा
विफलं भ्रमोपि । चन्द्रे कलाभिरनुवासरमेधमाने । मन्दीभवत्यपि
यथैव महान्धकारः ।। ब्र

(2) अभ्यासेन स्थिरं चित्तं अभ्यासेनानिलच्युतिः । अभ्यासेन
परानन्दो ह्यभ्यासेनात्मदर्शनम् ।। यो ।=भक्ति-ध्यान-योग-समा-
धिना-अभ्यासः ।

(3) एवं निरन्तरकृता ब्रह्मैवास्मीति वासना । हरत्यविद्या-विक्षेपान् । रोगानिव रसायनम् ॥ आ । कथं अभ्या–सः ? =

(4) विविक्तदेश आसीनो विरागो विजितेन्द्रियः । भावये-देकमात्मानं तमनन्तमनन्यधीः ॥ आ + 30 । अभ्यासपाटवात् ध्यानानन्तरं समाधिः ।

(5) शुद्धे चेतसि तस्यैव स्वात्मज्ञानं प्रकाशते । ध्यानादेव चित्त शुद्धिः । ध्यान निर्मथनाभ्यासात् देवं पश्येन्निगूढवत् ॥ श्रु + 3/6

(6) अश्वमेध द्यो यज्ञाः अशेषा वेददर्शिताः । मुनीन्द्रा ध्यान यज्ञस्य कलां नार्हन्ति षोडशीम् ॥ सूत + 64/4

(7) यज्ञानां जपयज्ञोस्मि । ∴ जपात् ध्यानं ध्यानाभ्यासात् समाधिः सविकल्पसमाधिना निर्विकल्पः–तेन आत्मदर्शनम् ॥ श्रु । = पूर्वपूर्वभ्यासात् उत्तारोत्तारजयः यत्नतः कार्यः = 69/5

वी

## (56) प्रणवः ॥

(1) परमात्मनि पुरुषं प्रणापयतीति प्रणवः ॥ अन्तः प्रणवो व्यावहारिकप्रणवः । बाह्यप्रणव आर्षप्रणवः । उभयात्मको विराट् प्रणवः । संहारप्रणवो ब्रह्मप्रणव अर्धमात्राप्रणवः ॥ ओमिति ब्रह्म ॥ ओमित्येकाक्षरमन्तः प्रणवं विद्धि । स चाष्टधा भिद्यते अकारोकार-मकारार्धमात्रा नाद बिन्दु कला शक्तिश्चेति ॥ सगुणो विराट् प्रणवः संहारो निर्गुणप्रणवः ॥ प्रपंचोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स ब्रह्मप्रणवः । स विज्ञयो नापरस्तुरीयः सर्वत्र भानुवन्मु-मुक्षूणामाधारः स्वयं ज्योति- ब्रह्माकाशः ॥ ह्रस्वो दहति पापानि दीर्घो मोक्षप्रदायकः । आप्यायनः प्लुतोवापि त्रिविधोच्चारणेनतु ।

तैलधारामिवाच्छिन्नं दीर्घघण्टा निनादवत्। अवाच्यं प्रणवस्याग्रं यस्तं वेद स वेदवित्॥

नादलिङ्गं चिदात्मकं तस्य विज्ञान मात्रेण जीवन्मुक्तो भवेज्जनः ॥ अमात्रश्चतुर्थो अव्यवहार्यः प्रपंचोपशमः शिवोऽद्वैतः ॥ श्रु

(2) अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः । ओंकारो विदितो येन स मुनिर्नेतरो जनः ॥ गौ । = अमात्रः = नादः । अनन्तमात्रः = सूक्ष्मनादः ।

(3) सरेचपूरैरनिलस्य कुंभैः सर्वासु नाडीषु विशोधितासु । अनाहताख्यो बहुभिः प्रकारैः अन्तः प्रवर्तेत सदा निनादः ॥ नादानुसन्धान नमोस्तु तुभ्यम् । त्वां साधनं तत्वपदस्य जाने । भवत्प्रसादात् पवनेन साकं विलीयते विष्णुपदे मनो मे ॥ चित्तं विषयोपरमात् यथा यथा याति नैश्चल्यं । वेणोरिव दीर्घतरः तथा तथा श्रूयते नादः ॥ शं

(4) माण्डूक्यमेकमेवालं मुमुक्षूणां विमुक्तये ॥ मकरन्दं पिबन् भृङ्गो गन्धान्नापेक्षते यथा । नादासक्तं तथा चित्तं विषयान् नहि काङ्क्षति ॥ नादान्ते मनोन्मनी ॥ यदा यात्युन्मनीभावं तदा तत् परमं पदम् ॥ तत्र मनो लीनं चेत् न पुनः संसारबन्धाय ॥∴स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासात् देवं पश्येन्निगूढवत् ॥ प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यं उच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ श्रु

(5) काष्ठवत् उन्मन्याऽवस्थायां ध्रुवम् । अमनस्केनैव समाधिना जीवन्मुक्तः, तस्य दर्शनं पवित्रम् ।। श्रु

(6) ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् । यः प्रयाति त्यजन्देहं स याति परमां गतिम् ।। गी

(7) शब्दब्रह्मणि निष्णातः शुद्धब्रह्माधिगच्छति ।। ओंकाररथमारुह्य विष्णुं कृत्वाऽथ सारथिं । ब्रह्मलोकपदान्वेषी रुद्राराधनतत्परः । तावद्रथेन गन्तव्यं यावद्रथपथि स्थितः । स्थाता रथपथि स्थानं रथमुत्सृज्य गच्छति ।। यदा यात्युन्मनीभावं तदा तत्परमं पदम् ।। श्रु । शब्दब्रह्मणि = नादे

(8) नादलिंग ज्ञानेन जीवन्मुक्तिः । उन्मन्यन्तं विचिन्तयेत् । तन्मययज्ञो नादानुसन्धानम् । ब्रह्मप्रणवमनुस्मरन् अन्तर्ध्यानं विना न मुक्तिः ।। श्रु

## (57) ब्रह्मानन्दस्य वासना का-कदा-प्रयोजनंच

(1) सर्वत्र सर्वतः सर्वं ब्रह्ममात्रावलोकनात् । सद्भाववासनादार्ढ्यात् तत्त्रयं लयमश्नुते ।।=लोकवासनया जन्तोः शास्त्रवासनयापि च देहवासनया ज्ञानं यथावन्नैव जायये ।। सद्वासनास्फूर्ति विजृम्भणे सति । असौ विलीनाप्यहमादिवासनाः । अतिप्रकृष्टाप्यरुणप्रभायाम् । विलीयते साधु यथा तमिस्रा ।। अन्तःश्रितानन्त दुरन्तवासना धूलीविलिप्ता परमात्मवासना । प्रज्ञाति सङ्घर्षणतो विशुद्धाप्रतीयते चन्दनगन्धवत् स्फुटा ।। वि । कथं तत् ? 31|2-3

(2) शुभवासनया चेतः शुभतामेति नित्यशः ।। श्रु

(3) शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् । पौरुषेण प्रयत्नेन योजनीया शुभे पथि । श्रु

(4) यथा यथा प्रत्यगवस्थितं मनः तथा तथा मुञ्चति बाह्यवासनाः । निश्शेषमोक्षे सति वासनानां आत्मानुभूतिः प्रतिबन्धशून्या ॥ वि

(5) मकरन्दं पिबन् भृङ्गो गन्धान्नापेक्षते यथा । नादासक्तं तथा चित्तं विषयान्नहि कांक्षति ॥ श्रु

(6).˙. आहारव्यवहारादिषु सर्वत्रच सत्ववासनामाश्रित्य – रजस्तमोनाशः कर्तव्यः ।=तमोद्वाभ्यां रजःसत्वात् सत्वं शुद्धेन — नश्यति । तस्मात्सत्वमवष्टभ्य स्वाध्यासापनयं कुरु ॥ वि

## (58) समाधौ क्रियमाणे विघ्नानि

(1) समधौ क्रियमाणे तु विघ्नान्यायान्ति वै बलात् । अनुसन्धानराहित्यं आलस्यं भोगलालसम् । लयस्तमश्च विक्षेपः रसास्वादश्च शून्यता ॥ एवं यद्विघ्नबाहुल्यं त्याज्यं ब्रह्मविदा शनैः । अ ॥ लयः= सुप्तिवत् तमोऽभिभूतं । तमः = केवलद्वैतविस्मरणं न समाधिः । विक्षेपः = विषयस्फुरणं । रसास्वादः=धन्योहमिति आनन्दाकारवृत्तिः । शून्यता = स्तब्धभावः । चित्तदोषः = ध्येयाभावः ॥ आलस्यं=योगसाधने औदासीन्यं ।

(2) यतो यतो निश्चरति मनः चंचलमस्थिरम् । ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ गी ।= मक्षिकाबाधादिना बहिर्याति तदा योगबलेन वशीकरणम् ॥

(3) समाहितस्सन् बहिरन्तरं वा । कालं नयेथाः सति कर्म-बन्धे । यत्किंचित्पश्यतो भेदं भयं ब्रूतेयजुश्रुतिः ।∴.आत्मदृष्ट्यैव तिष्ठेत् ॥ वि

(4) मनो ब्रह्मणि लीयते यदा निर्विकल्पसमाधिः ।∴.अतिप्रय-त्नेन ब्रह्मणि चित्तलयं कुरु ॥

(5) लये संबोधयेत् चित्तं विक्षिप्तं शमयेत्पुनः । सकषायं विजानीयात् समप्राप्तं न चालयेत् ॥ गौ ।=चित्तं लयाभिमुखं भवेद्यदि निरोधेन सम्यक्प्रबोधयेत् । निद्राशेष अजीर्णादिना लये-सति=समाराध्य निद्रां सुजीर्णाल्पभोजी योगे प्रवर्तेत ॥ यदा मनो युक्ततमो भवति तदा अभ्यसेत् ॥ शं

(6) यदा पंचावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च नवि-चेष्टति तामाहुः परमां गतिम् ॥ श्रु ॥ पञ्चज्ञानेन्द्रियाणि च मनश्च उपरम्य बुद्धिवृत्तिं च निरुध्य अहमो लयपूर्वकं निर्वासनया ब्रह्म-समाधिः कर्त्तव्यः ।

## (59) ब्रह्म दृश्यते वा नवा

(1) दृश्यते त्वग्रया बुध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ श्रु

(2) अयमात्मा नित्यसिद्धः प्रमाणे सति भासते । न देशं नापिवा कालं न शुद्धिं वाप्यपेक्षते ॥ एष स्वयं ज्योतिरनन्तशक्तिः । आत्माऽप्रमेयः सकलानुभूतिः । यमेव विज्ञाव विमुक्तबन्धो । जय-त्ययं ब्रह्मविदुत्तमोत्तमः ॥ वि

(3) शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्म-न्येवात्मानं पश्येत ॥ श्रु

(4) शमादि साधनः पश्येदात्मन्यात्मानमंजसा ॥ अपरोक्षतयैवात्मा समाधावनुभूयते । केवलानन्दमात्रत्वेनैवमत्र न संशयः ॥ न तावदयमेकान्तेनाविषयः अस्मत्प्रत्यय विषयत्वात् अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः ॥ शं

(5) मृद एवावभानेपि मृण्मयद्विपभानवत् । सन्मात्रवस्तु भानेपि त्रिपुटीभाति सन्मयी ॥ समाधिरत एवायं सविकल्प इतीर्यते ॥ स

(६) द्रष्टा दृशिमात्रः शुद्धोपि प्रत्ययानुपश्यः ॥ सू

(7) योगिनस्तं प्रपश्यन्ति भगन्वतं सनातनम् ॥ सन

(8) सर्वगं सच्चिदात्मानं ज्ञानचक्षुर्निरीक्षते । अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ॥ आ + 26

(9) उत्क्रामन्तं स्थितं वापि भुंजानं वा गुणान्वितम् । विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ गी

(10) अतिसूक्ष्मत्व सिद्धये निरोधः समाधिः ॥ श्रु । सविकल्पे दृश्यति-निर्विकल्पे न दृश्यति=ब्रह्मवृत्तिरपि ब्रह्ममात्रम् ।

## (60) पूर्वोक्तानां सारभूतम्=१

(1) विशुद्धमन्तःकरणं स्वरूपे निवेश्य साक्षिण्यवबोधमात्रे। शनैः शनैः निश्चलतामुपानयन् पूर्णं स्वमेवानु विलोकयेत्ततः ॥ लक्ष्ये ब्रह्मणि मानसं दृढतरं संस्थाप्य बाह्येन्द्रियं । स्वस्थाने विनिवेश्य निश्चलतनुश्चोपेक्ष्य देहस्थितिम् । ब्रह्मात्मैक्यमुपेत्य तन्मयतया चाखण्डवृत्त्याऽनिशम् । ब्रह्मानन्दरसं पिबात्मनि मुदा शून्यैः किमन्यैर्भ्रमैः ॥ वि = ब्रह्मवृत्तिः

(२) कस्तां परानन्दरसानुभूतिमुत्सृज्य शून्येषु रमेत विद्वान् । चन्द्रे महाह्लादिनि दीप्यमाने चित्रेन्दुमालोकयितुं क इच्छेत् ॥ वि

(3) आनन्दाम्बुधिमग्नोऽसौ देही तत्र न दृश्यते ॥ शं

(4) येतु वृत्तिं विजानन्ति ज्ञात्वापि वर्धयन्ति ये । तेवै सद्-ब्रह्मतां प्राप्ताः नेतरे ब्रह्मवादिनः ॥ अ ॥ पुण्येन उत्तमजन्म–तेन–सत्वाहार + प्राणायामेन नाडिशुद्ध्या मनःशुद्धिः–मन्त्रोपदेशजपेन-तपसा–वैराग्येण–सन्यासेन-गुरूपदेशेन–अहंग्रहनिर्गुणो पासनया-भावनया–ध्यानेन–सविकल्पेन–निर्विकल्पसमाधिना–ब्रह्मानुभवेन–ब्रह्मत्वम् ।

## (61) उपदेशविधिः–फलं च

(1) विवेकिनो विरक्तस्य शमादिगुणशालिनः । मुमुक्षोरेव हि ब्रह्म जिज्ञासा योग्यता मता ॥ वि । = उत्तमाधिकारी ∴.

(2) प्रशान्तचित्ताय शमान्विताय च प्रहीणदोषाय यथोक्त-कारिणे । शमान्वितायानुगताय सर्वदा प्रदेयमेतत्सततं मुमुक्षवे ॥ उ

(3) नहीह लाभोऽभ्यधिकोस्ति कश्चन । स्वरूपलाभात्स इतोऽस्ति नान्यतः । नदेयमैन्द्रादपि राज्यतोऽधिकम् । स्वरूप लाभ-न्त्वपरीक्ष्य यत्नतः ॥ उ । = यस्य वैराग्यं भक्तिलिंगमपि नास्ति तस्मै न देयं ।

(4) कृतकृत्यश्च सिद्धश्च योगी ब्राह्मण एवच । य एवं वेद तत्वार्थं अन्यथा ह्यात्महा भवेत् ॥ उ

(5) य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति । भक्तिं मयि परां

कृत्वा मामेवैष्यत्यसंशयः ॥ नाभक्ताय कदाचन ॥ गी ।=द्रुते चित्ते भवेद्भक्तिः । अद्रुतेतु न किंचन ॥

(6) मुख्यजीवस्य तत्वमसीत्युपदेशः । न अपरमार्थ जीवयोः। मुख्यजीवः = 15 ॥ व्यावहारिकस्य गौणाधिकारः सः विविदिषा-सन्यासी । सोपि वैराग्येण शमादिना गुरुप्रसादेन च मुख्यो भविष्यति ॥ शं ॥

(7) अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते । तेपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ गी ॥=गुरूपदिष्टमार्गेण वर्तमानानामपि मोक्षोनिश्चितः ।

## (62) समाधिकरणे अशक्तानां विधिः

(1) समाधिकरणे अशक्तो यदि मुमुक्षुः । ब्रह्मैवाहं न संसारी मुक्तोऽहमिति भावयेत् । अशक्नुवन् भावयितुं वाक्यमेव समभ्यसेत् ॥ शं

(2) शक्यः सर्वनिरोधेन समाधिर्योगिनां प्रियः । तदशक्तौ क्षणं रुध्वा श्रद्धालुर्ब्रह्मताऽत्मनः । श्रद्धालुर्ब्रह्मतां स्वस्य चिन्तयेत् बुद्धिवृत्तिभिः । वाक्यवृत्या यथाशक्ति ज्ञात्वाद्धाभ्यस्यतां सदा । तच्चिन्तनं तत्कथनं अन्योन्यं तत् प्रबोधनम् । एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥ श्र

(3) देहात्मधीवत् ब्रह्मात्मधीदार्ढ्ये कृतकृत्यता । यदातदाऽयं म्रियतां मुक्तोऽसौ नात्र संशयः ॥ शं

(4) अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते । तेऽपि चाति-

तरन्त्येव मृत्युं श्रुतिपरायणाः ॥ गी ॥ = गुरूपदिष्टमार्गेण श्रद्धया ये उपास ते तेऽपि कालेन मुच्यन्ते ॥ गू । + 66

## (63, समाधिं उपेक्ष्य तीर्थयात्रा जपादीन् कुर्वतः फलम्

(1) तमुपेक्ष्य तीर्थयात्रा जपादीनेव कुर्वताम् । पिण्डमुत्सृज्य करं लीढीतिन्याय आपतेत् ॥ उत्तमा तत्वचिन्ताच तीर्थभ्रान्त्यधमाधमा ॥ श्रु

(2) दूरयात्रां प्रयत्नेन वर्जयेदात्मध्यानपरायणः । श्रु

(3) यावन्नलभ्यते शास्त्रं तावद्गां पर्यटेद्यतिः । विदितेतु परेतत्वे एक एवावशिष्यते ॥ न उपवासपरो यतिः । श्रु

(4) उत्तमा तत्वचिंताच मध्यमं शास्त्रचिन्तनं । अधमा मन्त्रचिन्ताच तीर्थभ्रान्त्यधमाऽधमा ॥ श्रु = एतत् विद्वत्सन्यासिविषयम् ।

## (64) वाङ्-मनः-काय-पूजानां फलतारतम्यम्

(1) द्रव्ययज्ञाज्जपो यज्ञो विशिष्टो दशभिर्गुणैः । उपांशुः स्याच्छतगुणः सहस्रो मानसःस्मृतः ॥ चिन्तनं सर्वशब्दानां मानसं तज्जपं विदुः । स्तुति स्मरण पूजाभिर्वाङ्मनः काय कर्मभिः । सुनिश्चला शिवे भक्तिरेतदीश्वरपूजनम् । स । भक्तिः = 84/1

(2) अतिमन्दाधिकारिणां जप एवोक्तः । उत्तमाधिकारिणां प्रणवार्थानुसन्धानरूपसन्ध्योपासनम् । जपादिरहितं निरुदकमेव अविरुद्धकम् ॥ श्रु

(3) श्रुतेः शतगुणं विद्यान्मननं मननादपि । निदिध्यासं लक्ष-गुणमनन्तं निर्विकल्पकम् । वि

(4) प्रायश्चित्तेषु सर्वेषु यतेर्ध्यानं विशिष्यते । ध्यानेन सदृशं नास्ति शोधनं पापकर्मणाम् ।। श्रु

(5) भजन् भक्त्या विहीनो यः । स चंडालोऽभिधीयते ।। श्रु । =एतत् सन्यासिविषयं न गृहस्थस्य ।

## (65) जपकरणे नियमाः–इतरनियमाश्च

(1) नियमेन जपं कुर्यात् अकृतौ प्रत्यवायतः । अन्यथाकरणे अनर्थः स्वरवर्णविपर्ययात् ।। स्मृ

(2) जपकालेतु न भाषेत नान्यान् संप्रेक्षयेत् बुधः । न कंपयेत् शिरोग्रीवान् दन्तान्नच प्रकाशयेत् ।। असंख्यातंच यज्जप्तं तज्जप्तं निष्फलं भवेत् ।। स्मृ

(3) सहस्रं श्रवणार्थीतु योगाभ्यासी शतं जपेत् । निर्विकल्प-समाधिस्तु न जपेत्किंचिदद्वयात् ।। श्रु । विविदिषायां द्वादशसहस्रं विधीयते ।

(4) सोहं सोहमिति प्रोक्तो मन्त्रयोगः स उच्यते । स्वात्मैक चिंतनं यत्तदीश्वरध्यानमीरितम् । नास्ति नादात्परो मन्त्रो न देवः स्वात्मनः परः ।। श्रु

(5) एकाचण्डया रवेः सप्त तिस्रः कार्या विनायके । चत्वारः विष्णवे दद्यात् शिवस्यार्धः प्रदक्षिणा ।। स्मृ ।। ∴सन्यासिनां चत्वारः नमस्काराः विष्णुरूपत्वात् ।। कथं विष्णुरूपत्वं = द्वे रूपे वासुदेवस्य

चलं चाचलमेवच । चलं सन्यासिनां रूपं अचलं प्रतिमादिषु ॥ स्मृ + 43/2-3

(6) अदुष्टा पतितं साधुं यतिर्यः परिवर्जयेत् । स तस्य सुकृतं दत्वा दुष्कृतं प्रतिपद्यते ॥ तथैवच गृहस्थस्य निराशो भिक्षुको गतः । हुतं दत्तं तपोऽधीतं सर्वमादाय गच्छति ।। स्मृ

(7) यति गायत्रीजपिता वटवाद्यास्तारजापकाः । मन्त्रजाप्यश्च नार्यश्च सर्वे निरयगामिनः ॥ स्मृ ।=अनधिकारात् ।

पादं पादेन विन्यस्य जपं नैवतु कारयेत् । शिरः प्रावृत्य वस्त्रेण ध्यानं नैवतु कारयेत् ।। स्मृ

(8) यो भवेत् पूर्वसन्यासी धर्मतस्तुल्यतो यदि । तस्मै प्रणामः कर्तव्यः नेतराय कदाचन ।। श्रु ।=धर्मतः=ध्यानपरः योगपरः श्रवणार्थी जपानुष्ठानपरः दण्डी दण्डरहितः इत्यादिभेदाः ॥ यो न स्वरूपज्ञः स ज्येष्ठोपि कनिष्ठः । किंचिन्न वक्तव्यं आत्मज्ञानात्मरूपतः । यद्युच्यते तदा स्वस्मिन्नापतेत्परमप्रियम् । गूढधर्माश्रितो विद्वान् अज्ञातचरितं चरेत् । श्रु ।।

## (66) दण्डस्वीकरणं-रक्षणं-त्यागं प्रति विचारणा

(1) दण्डात्मनोस्तु संयोगः सर्वथैव विधीयते । श्रु । आत्मा=देहः-सर्वथैव=सर्वप्रकारेण ।

(2) विविदिषायां-वैणवं दण्डं कमण्डलुं वस्त्रं कटिसूत्रकौपीनं देहरक्षणं । विष्णुहस्ते यथा चक्रं शूलं शिवकरे यथा । इन्द्रहस्ते यथा वज्रं तथा दण्डो भवोद्यमे । सखा मे गोपायेति दण्डं परिग्रहेत् ॥ श्रु

(3) दण्डत्यागं न कुर्वीत यावत्प्राणविधारणम् । यदि त्यागं

कुर्यात् पुनः नैव धारयेत् । प्रमादेनच तं धृत्वा यतिर्भ्रष्टो न संशयः। शतजन्म भवेच्छूद्रः—स्मृ ॥

(4) कौपीनंदण्डमाच्छादनं च स्वशरीरोपभोगार्थाय लोकस्यो- पकारार्थाय च परिग्रहेत् ॥ श्रु । कथं दण्डेन लोकस्योपकारं= काषाय दण्डमात्रेण यतिः पूज्यो न संशयः–इतिवाक्यं स्मृत्वा भिक्षां दास्यन्ति ॥

(5) तितिक्षाज्ञान वैराग्य शमादिगुणवर्जितः । भिक्षामात्रेण यो जीवेत्स यतिः यतिवृत्तिहा ॥ काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः । स यति नरकान् घोरान् महारौरवसंज्ञितान्-श्रु ॥ ∴ज्ञानशास्त्रं-जपानुष्ठानादयो श्रद्धया अनुष्ठेयाः ।

(6) ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते । न दण्डं न कमण्डलुं सः आकाशांवरो भवेत्–न शीतं नचोष्णं स्ववपुः शवमिव पश्यन् पाणिपात्रो दिगंबरः हस्तग्रामं भक्षयेत् । ताडितो विष्ठितो मूत्रितोपि न दुःखं न मानावमानः–सः मुख्यः ॥ श्रु ॥

( ज्ञानदण्डं समाश्रित्य जीवन्ति बहवो जनाः । नरके रौरवे- घोरे कर्मत्यागात्पतन्ति ते । स्मृ ॥ ज्ञानदण्डिनः न श्रवणं न पठनं न अनुष्ठानं जपंवा न मनोपि । कीटवत्पर्यटेत्–न सुषुप्तिः न एकान्नाशी भवेत् ॥ श्रु ∴गुरुदत्त दण्डं अनुष्ठानजपं च त्यक्त्वा न शरीरं पोषणीयम् । ∴मौनं योगासनं योगः तितिक्षैकान्तशी- लता । निस्पृहत्वं समत्वं च सप्तैतानेकदण्डिनः ॥ श्रु ) एते नियमाः-सप्तग्रन्थियुतः ज्ञानदण्डः ॥

(7) अलिंगी लिंगिवेषेण यो वृत्तिमनुजीवति । स लिंगिनां हरत्येन स्तिर्यग्योनिषु जायते । स्मृ ॥

(8) शरीरं दण्डमेव दण्डं च शरीरमेव आत्मा अन्यः-मानावमानबहुमानादयः देहस्यैव न आत्मनः इति अजस्रं ज्ञापयति मनोवाक्कायाघं च नाशयति । यथायथा शरीराभिमानं गलति दण्डाभिमानं च गच्छति । देहे सर्वात्मना विस्मृते दण्डं च विस्मृतं भवति ।

## (67) उपासनं फलं च

(1) उपासनं नाम यथाशास्त्रमुपास्यस्य अर्थस्य विषयीकरणेन सामीप्यमुपगम्य तैलधारावत् समानप्रत्ययप्रवाहेण दीर्घकालं यत् आसनं तत् उपासनम् ॥ गी भा ॥ निर्गुणोपासनं अव्यक्तत्वात् न मनसापि चिंत्यम् । कथं तदुपासनं चेत्=मनोबुद्धीन्द्रियवृत्तीनुपसंहृत्य अनुष्ठेयम्=(सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः । ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ गी ।=ते मद्रूपा एव = भा । = श्रद्धा भक्तिध्यान योगेन मद्रूपा भवन्ति ॥

(2) गवांसर्पिः शरीरस्थं न करोत्यंगपोषणम् । तदेव कर्मरचितं पुनस्तस्यैव भेषजम् ॥ एवं सर्व शरीरस्थं आत्मानं परमेश्वरः । विनाचोपासनं देवः न करोति हितं नृषु ॥ आदौ सगुणमाश्रित्य पश्चान्निर्गुणमाचरेत् ॥ स्मृ

(3) पाषाण लोह मणि मृण्मय विग्रहेषु पूजा पुनर्जनन भोगकरी मुमुक्षोः । तस्माद्यतिः स्वहृदयार्चनमेव कुर्यात् बाह्यार्चनं परिहरेदपुनर्भवाय ॥ श्रु

(4) मानसपूजाप्रकारः=आराधयामि मणिसन्निभमात्मलिंगं मायापुरी हृदयपंकजसन्निविष्टम्। श्रद्धानदी विमलचित्त जलाभिषेकैः नित्यं समाधिकुसुमैरपुनर्भवाय ॥ इति मनसि भावयेत्

(5) परमाणु परममहत्वान्तोऽस्य वशीकारः ॥ सू

(6) भगवच्चरणता त्रिविधा = तस्यैवाहं—ममैवासौ—सएवाहं—इति ।=तवाहं न मामकीनस्त्वं सामुद्रोहितरङ्गः कचन समुद्रो । न तारंगः ॥ २ = हस्तमुत्क्षिप्य यातोसि बलात् कृष्ण किमद्भुतम् । हृदयाद्यदि निर्यासि पौरुषं गणयामि ते ॥ ३=अवधिमात्रं यथा एकमेवाद्वयं ब्रह्म–शिवोहं इतिवत्=सगुणध्याने तात्तम्यम् ॥ गू

(7) सगुणे अहंग्रहोपासनाभ्यासपाटवात् निर्गुणयोगे प्रवर्तते ॥ निर्गुणे अहंग्रहोपासनं = निदिध्यासनं । अहंग्रहोपासनं नाम शरीरत्यागपूर्वकं ध्येयाकारेण चिन्तनम् ॥

## (68) वेदाध्ययनं कर्मनिष्ठा नामकीर्तनं शास्त्रविचाराणां फलं किं ज्ञानयोगेन मोक्षश्चेत् ॥

(1) कलौ वेदान्तिनः पापाः कान्ताकाञ्चनतत्पराः । ज्ञानहेतुः श्रौतकर्म न कुर्वन्ति विमोहिताः ॥ इहैव नरकव्याधेः चिकित्सां न करोति यः । गत्वा निरौषधं देशं व्याधिस्थः किंकरिष्यति । अनित्यप्रियसंवासे कथं तिष्ठति निर्भयः ॥ श्रु । = भक्तिरहित वेदान्तं निषिध्यते यस्तु

पुण्यकर्माणौ पंक्तिपावनपावनौ ॥ स्मृ ।=तेषां पुण्यकर्मत्वं पावकत्वं च विद्यते न मोक्षसाधनत्वं ॥=44

(3) यद्यदाचरति श्रेष्ठः तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् । जोषयेत् सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ गी ।=देवालयादिस्थलेषु अर्चनं वन्दनादीनि विद्वत्सन्यासिभिरपि समाचरणीयानि ॥

(4) स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः । गी ।∴स्वकर्मकरणानन्तरं नामकीर्तनादिः । ? अन्यथाकरणे विहितत्यागअविहितकरणदोषौ प्रसज्येयाताम्—?=( अकृत्वा वैदिकं कर्म द्विजः पतनमृच्छति ) । स्मृ ॥ श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् । स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ गी=जात्याश्रमेणवा विगुणोपि स्वधर्मः निश्रेयससाधनः=वैराग्यजनकः येन मुमुक्षुत्वं जायते ॥

(5) न च कर्मविधिश्रुतेः अप्रामाण्यं ? पूर्वपूर्वप्रवृत्तिनिरोधेन उत्तरोत्तर अपूर्व प्रवृत्तिजननस्य प्रत्यगात्माभिमुख्य प्रवृत्युत्पादनार्थत्वात् । मिथ्यात्वेपि उपायस्य उपेयसत्यतया सत्यमेव स्यात् । गी भा

(6) जप्येनैवतु संसिध्येत् ब्राह्मणो नात्रसंशयः । कुर्यादन्यन्नवा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ स्मृ । यज्ञानां जपयज्ञोस्मि । गी ।∴ अधिकृतै=( यज्ञदान तपः कर्म नत्याज्यं कार्यमेव तत् । यज्ञोदानं तपश्चैव पावनानि मनीषिणाम् ) गी

(7) सहस्रनाम संकीर्तनफलं=वेदान्तगो ब्राह्मणः स्यात्...।

=वेदान्ते मनःप्रवृत्तिः ॥ परमहंसानां–न नामसंकीर्तनं–रे आत्म-ध्याननिष्ठाः । श्रु

(8) गृहस्थानामात्मविचारे क्रियमाणे प्रत्यवायो नास्ति किंतु श्री यो अतीव श्रमो भवति ? ॥ दिनेदिने च वेदान्तश्रवणाद्भक्तिसंयुतात् । गुरुशुश्रूषया लब्धात् कृच्छ्राशीतिफलं लभेत् ॥ स्मृ

(9) यस्तु अनात्मज्ञः चोदितं कर्म विसृज्य कर्मशून्यस्तिष्ठति स पापाचारः । गी भा ॥ विरक्तः प्रव्रजेत्धीमान् संरक्तस्तु गृहे वसेत् ( श्रु )=66/5·7 /∴ज्ञानवैराग्यादि साधनं विहितं=44

(10) कर्मणा शुद्धचित्तस्य संसृतेर्दोषदर्शनम् । ततो विरक्तिः संसारात् मोक्षेच्छा जायते ततः ॥ सूत । =अनन्तरं आत्मविचारणे प्रवर्तते ।

(11) भारोऽविवेकिनः शास्त्रं भारो ज्ञानं च रागिणः । अशा-न्तस्य मनो भारो भारोऽनात्मविदो वपुः । श्रु ।=यः न आत्म-वित् तस्य शरीरमपि भारमेव ।

(12) अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभं ॥ अवश्यं भाविभावानां प्रतीकारो भवेद्यदि । तदा दुःखैर्न लिप्येरन् नल-रामयुधिष्ठिराः ॥ स्मृ ।

(13) न छन्दांसि वृजिनात्तारयन्ति । मायाविनं माययावर्त-मानम् । छन्दांस्येनं प्रजहन्त्यन्तकाले । नीडं शकुन्ता इव जात-पक्षाः ॥ सन ।

(14) वर्णाश्रमवयोऽवस्थाभिमानो यस्य विद्यते । तस्यैवहि निषेधाश्च विधयः सकला अपि ॥ शं

(15) अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत्। महानिरय-जालेषु स तेन विनियोजितः ॥ श्रु=अधिकृतस्यैव अतिसूक्ष्मविषये अधिकारः ।

(16) नायं लोकोस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम । यज्ञदान-तपः कर्म न त्याज्यं कार्यमेव तत् ॥ गी । अतिथिदेवो भव श्रद्धया देयं-भिक्षा भिक्षोर्विधीयते=श्रु ।

## (69) पुरुषप्रयत्नं सर्वत्र सामान्यम्

(1) शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित्। पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥ श्रु

(2) तन्मनः शोधनं कार्यं प्रयत्नेन मुमुक्षुणा । प्रयत्नात् ज्ञातव्यं तत्वज्ञात् तत्वमात्मनः ॥ तस्मात् सर्वप्रत्यनेन भवबन्धविमुक्तये । स्वैरेव यत्नः कर्तव्यः रोगादाविव पण्डितैः ॥ वि

(3) प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः । वश्यात्मनातु यतता शक्योऽवाप्तुमुपायतः । यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्य-वस्थितं ॥ गी

(4) ( ईश्वरप्रेरितो गच्छेत् स्वर्गं वा नरकमेव वा ) इति न कदापि भवेत्। विवेकी श्रेयोमार्गे यत्नवान्भवेत् ॥ आहार निद्रा भय मैथुनं च । समानमेतत् पशुभिर्नराणां । तेषामेषां विशेषः कः ) इतीदं स्मृत्वा मोक्षे यत्नवान् भवेत् ॥=44

(5) स्वप्रयत्नं विना—कर्मानुष्ठानं ज्ञानरूपेण वा—सगुणोपासनं निर्गुणरूपेणवा संसारबन्धनं मोक्षरूपेणवा—स्वदेहसहित दृश्यप्रपंचं

ब्रह्माकारेण वा दुःखं आनन्दाकारेण वा—नैव जायते ॥.॰.( गृहीत इव केशेषु मृत्युना धर्ममाचरेत् । कः शोच्यः सति [illegible] न यो दाता । इतः कोन्वस्ति मूढात्मा यस्तु स्वार्थे प्रमा[illegible] । अनित्य प्रियवासे कथं तिष्ठति निर्भयः ) ॥—शं

## (70) जीवन्मुक्तानां योगाभ्यासिनां च विशेषश[illegible]: लोकोपकारित्वं च अस्तिवा अथवा उन्मत्तस्यैव नि[illegible] वा समाधिः ? ॥

(1) समाधि निर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् । न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ॥ स=4

(2) ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् ॥ श्रु—ध्यान समाधौ गुणानतीत्य शक्तिमान्योगी ॥

(3) यं यं लोकं मनसा संविभाति विशुद्धसत्वः कामयते यांश्च कामान् । तं तं लोकं जयते तांश्च कामान् तस्मादात्मज्ञं ह्यर्चयेत्भूतिकामः ॥ श्रु । कथं तदिति चेत् = स एव साक्षान्नारायणः—स एव शिवः । श्रु । = 43/2-3 + 65/5

(4) बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् । स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥ = समाधौ ब्रह्मणासह एकी भवति ॥ अवजानन्ति मां मूढाः मानुषीं तनुमाश्रितम् । परं भावमजानन्तः—ममभूतमहेश्वरम् ॥ गी ॥ बुद्धिमनश्चित्ताहंकारे

भूजल तेजोगगन समीरे । खेलति पिण्डाण्डे भगवान् खेलति पिण्डाण्डे ॥ श्र ॥ = 70/9

ईश्वर समाधि समये मन्मथदहनं यथा-यथावा श्रीरामेण दुष्ठ निग्रहः । तथा योगी असहायो महाबलः—देवैरपि न लक्ष्येत योगि देहो महाबलः—तस्यदेवा असन्वशे = श्रु ।∴यतिदूषणं मास्तु इति = शं

(4) तुरीयः परमोहंसः साक्षान्नारायणो यतिः । परास्यशक्तिः विविधैव श्रूयते ॥ श्रु ।=अतिसूक्ष्मचिच्चक्तिः उपाधिसंबन्धात् इच्छाशक्तिः ज्ञानशक्तिः क्रियाशक्तिः इति भाति ॥ भीषास्माद्वातः क्रि पवते भीषोदेति सूर्यः-श्रु ॥ सः शिव एव साक्षात्=शं

(5) अत्युज्वलं नादं चिच्चक्तिः-चिद्रूपत्वात् न तत्र ज्ञाना ज्ञाने । श्रु

(6) दृष्टि स्पृष्टि श्रुतिर्घ्रातिर्मतिर्विज्ञाति रेव च शक्तयोऽन्याश्च भिद्यन्ते चिद्रुपत्वे प्युपाधिभिः । उ ॥ उपाधिभेदात् भेदमिव दृश्यते ।

(7) सर्वस्यदातारमचिन्त्य शक्तिं । सर्वज्ञः सर्वसिद्धिदः सर्वेश्वरः अहमिति स परिव्राडेकाकीचरति ॥ सन्यासिनं द्विजंदृष्ट्वा स्थानाच्चलति भास्करः-एषमेमण्डलं भित्वा परंब्रह्मधिगच्छति ॥ स्वसामर्थ्यं न दर्शयेत्—अतिमानुष्यसामर्थ्यं न दर्शयेत्—जानन्नपिहि मेधावी जडवल्लोक माचरेत् ॥ श्रु

(8) यथा संकल्पयेद्योगी योगयुक्तो जितेन्द्रियः तथा तत्तद्वाप्नोति भाव एवात्र कारणम् ॥ श्रु ।=यदि योगिनोमनः किंचि-

स्क्षुभ्यति महते अनर्थाय भवेत्—तथैव मनःप्रसादमपि सुखा-वहम् ॥ = 70/3

(9) यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकं । अतत्वार्थ-वदल्पंच तत्तमसमुदाहृतम् ॥ गी । सदा सर्वगतोप्यात्मा न सर्व-त्रावभासते । बुद्धावेवाव भासेत स्वच्छेषु प्रतिविंबवत् ॥ श्रा

## (71) यतीनां भिक्षादान विधिः—फलंच

(1) भिक्षा भिक्षोर्विधीयते । भैक्षं देहरक्षणे । श्रु । सन्यासिनां भिक्षान्नं–गृहस्थानां भिक्षादानं च शास्त्रविधिः ॥

(2) यतिहस्ते जलं दद्यात् पुनर्भैक्ष्यं पुनर्जलम् । तदन्नं मेरु-तुल्यसमं भवेत् तज्जलं सागरोपमम् । स्मृ । = बहुदान फलम् ॥ तत्कथंचेत = स सर्वेषुलोकेपु सर्वेषुभूतेषु सर्वेष्वात्मसु हुतं भवति । ये देवा दिव्येकादशस्था‥सर्वेदेवाः तृप्यन्ति ∴अतिथिदेवो भव । श्रु ॥ काषाय दण्डमात्रेण यतिः पूज्यो न संशयः । स्मृ ॥ ज्ञानीवा इति न संशयः कार्यः ॥ गृहस्थः किमपि न दास्यतिचेत् महती विनष्टिः । ?

(3) तथैवच गृहस्थस्य निराशो भिक्षुको गतः । हुतं दत्तं तपोऽधीतं सर्वमादाय गच्छति । स्मृ ।∴यत्किंदिञ्चपि देयं ॥ ब्रह्मचारी च सन्यासी पक्वान्नस्वामिनावुभौ ॥ हुतशेषं भुक्तशेषं देवतानिवे-दितशेषं न देयम् ।

— (4) परमात्मनि यो रक्तः विरक्तोऽपरमात्मनि । सर्वेषणा विनि-र्मुक्तः स भैक्षंभोक्तुमर्हति । एकान्नं नतु भुञ्जीत बृहस्पतिसमादपि ।

अभिशस्तं पतितं पाषण्डं वर्जयित्वा—सर्ववर्णेषु चापदि ॥ अयाचितं यथालाभं भोजनाच्छादनं भवेत् । श्रु

(5) कश्शोच्यः सति विभवे न यो दाता । शं । =देहान्ते किं भवेत्जन्म तन्नजानन्ति मानवाः । श्रु । =पुण्य पापानुरूपेण जन्म-भवेत् ॥ स्मृ

## (72) जन्म-मरण अभावं कदा सिध्यति—

(1) सुषुप्ताख्यं तमोऽज्ञानं बीजं स्वप्नप्रबोधयोः । स्वात्मबोध प्रदग्धं स्यात् बीजं दग्धं यथाऽभवम् ॥ उ । =कारणशरीरे दग्धे न पुनर्जन्म । कथं तदुपलभ्यते ?=( विश्रान्तिमासाद्य तुरीयतल्पे विश्वाद्यवस्थात्रितयोपरिस्थे । संविन्मयीं कामपि सर्वकालं निद्रां सखे निर्विश निर्विकल्पां ॥ शं । =निर्विकल्पसमाधिना एव कारण-शरीरनाशः-अनन्तरं न जन्म ।

(2) देहत्रयमिदं नित्यमात्मत्वेनाभिमन्यते । यावत्तावदयं मूढो नानायोनिषु जायते ॥ शं । मनुष्यजन्म भविष्यतीति न निश्चयः ? कर्मानुरूपत्वात् ।

(3) ∴ शान्तं शिवमद्वैतं चतुर्थं मन्यते स आत्मा स विज्ञेयः ॥ श्रु

(4) अहंकृतिर्यदा यस्य नष्टा भवति तस्यवै । देहस्यापि भवेन्नष्टो व्याधयस्तस्य किं पुनः ॥ श्रु ॥ अहंकारग्रहान्मुक्तः स्वरूपमुपपद्यते । चन्द्रवद्विमलः पूर्णः सदानन्दः स्वयंप्रभः ॥ वि

(5) हृदये स्फुटीभवति नेष्यत एव भूमा । भूम्नि स्फुटीभवति

नेष्यत एव दृश्यं । ब्र ॥∴.निर्विकल्पसमाधिना अनात्मप्रपंचलये जन्माभावः ॥ शं

(6) बन्धं च मोक्षं च मृषैव, मूढा बुद्धेर्गुणं वस्तुनि कल्पयन्ति ॥ न निरोधो न चोत्पत्तिः न बद्धो न च साधकः । न मुमुक्षुर्नवै मुक्तः इत्येषा परमार्थता ॥ वि । राहुग्रस्त दिवाकरेन्दुसदृशो माया समाच्छादनात् । सन्मात्रः करणोपसंहरणतः ।∴ अनात्मनः शरीरस्यैव जन्ममरणव्यवहारः न आत्मनः = अनात्मा मिथ्या । ( शं )

## (73) तपसः स्वरूपं फलं च

(1) जगन्मिथ्येति संकल्पबीजसन्तापं तपः ॥ तपसा प्राप्यते सत्वं सत्वात्संप्राप्यते मनः । मनसा प्राप्यते त्वात्मा ह्यात्मापत्या निवर्तते । नातपस्कस्य आत्मध्याने अधिगमः । तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति ॥ श्रु ।

(2) बाह्येन्द्रिय निग्रहः-अन्तरिन्द्रिय निग्रहः—साधनचतुष्टयं सर्वं तपः । = आहारनियमः-प्राणायामः-अहिंसादि-नियमाः = तपः ।

(3) शरीरादितपः कुर्यात्तद्विशुध्यर्थमुत्तमं । मनआदि समाधानं तत्तत् देहविशोषणं ॥ मनसश्चेन्द्रियाणां च ह्येकाग्रयं परमं तपः । तत् ज्यायः सर्वधर्मेभ्यः सधर्मः पर उच्यते ॥ उ । = मनसश्चेन्द्रियाणामैकाग्रय संपादनार्थं शरीरादितपः । भावसंशुद्धिरित्येतत् तपो मानस उच्यते ॥गी । अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत् । असदित्युच्यते, पार्थ, न, च, तत्प्रेत्य नो, इह ॥ गी ।

## (74) सन्यासानन्तरमेव मोक्षमार्गः ।

(1) विरक्तः प्रव्रजेद्धीमान् संरक्तस्तु गृहे वसेत् । प्रवृत्तिलक्षणं कर्म ज्ञानं सन्यासलक्षणम् ॥ सर्वसंसारमुत्सृज्य सन्यासयोगेन मुक्तो भवति, विरक्तस्य तु संसारात् सन्यासस्यान्न संशयः । गुरुं ब्रह्मविदं व्रजेत् । जीर्णं कौपीनवासाः मुण्डी गुरूणां च हिते युक्तः तत्र संवत्सरं वसेत् । विधिवत्सन्यस्य त्यक्तसंगो जितक्रोधो लघ्वाहारो जितेन्द्रियः । एकाकी चरेत्, द्रव्यार्थमन्नवस्त्रार्थं यः प्रतिष्ठार्थमेव वा । सन्यसेदुभयभ्रष्टः स मुक्तिं नाप्तुमर्हति ॥ श्रु ॥ विशेषतः = 78/13

(2) परमार्थदर्शनं प्रतिपत्तुमिच्छता वर्णाश्रमाद्यभिमानकृतपुत्रवित्तलोकेषणादिभ्यो व्युत्थानं कर्तव्यम् ? । सम्यक्प्रत्ययविरोधात्तदभिमानस्य ।...तस्मादविद्याकार्यत्वात् सर्वकर्मणां तत्साधनानां च यज्ञोपवीतादीनां परमार्थदर्शननिष्ठेन त्यागः कर्तव्यः ॥ उ-44 ॥ न च ज्ञानकर्मसमुच्चयो मोक्षसाधनम् । ∵ सन्यासः कर्तव्यः ।

(3) कश्चिद्ब्रह्मचारी मुमुक्षुः पप्रच्छ । भगवन् कथमहं संसारान्मोक्षिष्ये । जागरिते स्वप्ने च दुःखमनुभूय सुषुप्तौ विश्रम्य... किमयमेव मम स्वभावः किं वा नैमित्तिकः इति । यदि स्वभावः न मे मोक्षाशा स्वभावस्य अवर्जनीयत्वात् । अथ नैमित्तिकः निमित्तपरिहारे स्यान्मोक्षोपपत्तिः ॥ उ-45 ॥ = न भेतव्यं त्वयेति आश्वासयति-न तवायं स्वभावः नैमित्तिकः = अविद्यायां निवृत्तायां मोक्ष्यसे ॥ उ-47 ॥

(4) विरुद्धत्वादतः शक्यं कर्म कर्तुं न विद्यया । सहैव विदुषा

तस्मात्कर्म हेयं मुमुक्षुणा । उ ॥=अनुपयोगात् अधिकारिविरोधाच्च कर्म हेयं ॥

(5) अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा । ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः ॥ गी ।= असङ्गशस्त्रेण=पुत्रवित्तलोकैषणादिभ्यो व्युत्थानेन विवेकाभ्यासेन संसारवृक्षं छित्त्वा । भा ।

(6). ∵.मोक्षेच्छुभिः अवश्यं सन्यासः कर्तव्यः ॥ अमानित्वादिसंपन्नो मुमुक्षुः एकविंशतिकुलं तारयति-ब्रह्मविन्मात्रेण एकोत्तरशतं तारयति=श्रु ।

## (75) कार्याकार्यव्यवस्थितौ शास्त्रं प्रमाणम्

(1) यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः । न स सिद्धिमवाप्नोति न सुखं न परां गतिम् । गी ।= सिद्धिं= पुरुषार्थयोग्यतां स्वर्गं मोक्षं वा । भा ॥

(2) तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ । ज्ञात्वा शास्त्रविधानोक्तं कर्म, कर्तुमिहार्हसि ॥ गी । प्रमाणं = ज्ञानसाधनं-श्रद्धया अनुष्ठेयं । +78/6

(3) अशास्त्रविहितं घोरं तप्यन्ते ये तपोजनाः । दम्भाहंकारसंयुक्ताः कामरागबलान्विताः । कर्शयन्तः शरीरस्थं भूतग्राममचेतसः । मां चैवान्तः शरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥=तदविवेकः ।∵.परिहार्यः । गी ॥

## (76) सन्यासमहत्वं ?

एतद्विचारकारणम्=आधुनिकेषु द्राविडेषु सन्यासिदूषणं वृद्धिं प्राप्य पुस्तकरूपेण सर्वत्र प्रकाशितम् ? ॥ (पश्यन्नपि च न पश्यति मूढो । ह्युदरनिमित्तं बहुकृतवेषः) इत्यादिवाक्यानि यतिदूषणपरत्वेन व्याख्यातानीति चित्रम् ॥ यस्य ब्रह्मानुभवं नास्ति.·.स मूढ एवेति चेत् तदन्यत्राप्यतिदिशतुं शक्यते–तद्युक्तम् ।.·.साधुव्याख्या रचनीया ॥ आत्मज्ञलक्षणं=12/11)—

(2) अग्निप्रवेशवत् सन्यासः ? गृहोचितसुखं दूरीकृत्य आत्मस्वरूपान्वेषणार्थी जातः ॥ आत्मविज्ञानी यद्येकोपि भवति स ब्रह्मादीनामपि वरेण्यः ? (समहात्मा सुदुर्लभः) ॥ इतरे तु यत्नानुरूपेण ज्ञानवैराग्य-योगमार्गेण वा कालेन मुच्यन्ते ॥ सन्यस्तं मयेति वक्तुमप्यसमर्थाः यतिमनोभावमजानन्तः दुष्यन्ति । यतिदूषणं महत्पापकरम् । गृहस्थो यदि पराङ्मुखः यतयोपि निस्पृहाः 71/3 ) कश्शोच्यः 71/5 )

(3) यतयो महान्तः=शं ( तुरीयः परमो हंसः साक्षान्नारायणो यतिः=श्रु ) द्वे रूपे वासुदेवस्य चलं चाचलमेव च । चलं संन्यासिनां रूपं अचलं प्रतिमादिषु=स्मृ ) सन्यास एकएव मोक्षमार्गः न अन्यो मार्गः । मोक्षेच्छा नोचेत् ? ( महतीविनष्टिः ) मर्त्यत्व सिद्धेरपि पुंस्त्व सिद्धेः । विप्रत्वसिद्धेः विवेकसिद्धेः । वदन्ति मुख्यं फलमेव मोक्षं । व्यर्थं समस्तं यदि चेन्न मोक्षः=शं ) ॥ कर्मणा भक्त्या वा मुक्तिश्चेत् 68/13+78/6 ) सन्यासिनां महत्वं शक्तिमत्वं 70/3-4 ) यति (तम) क्षुभ्यति चेत् 70/8 )

(4) ∴गृहस्थः यतिमार्गमदूषयन् पुण्यसम्पादनार्थी मुक्तिसाधनसंपादनार्थी च भविष्यतीति + मठाधिपाश्च यतीन् आद्रियेरन् इत्यत्र प्रार्थितम् ॥

## (77) पूर्वोक्तानां सारं संक्षिप्यते ॥

(1) मनुष्यत्वं दुर्लभं विप्रत्वं तत्रापि दुर्लभं 44/1 + 31/4-5) तदपि प्राप्य मुक्त्यै यत्नं न करोति चेत् महती विनष्टिः । ? देहान्ते मनुष्यत्वमेव भविष्यतीति न निश्चयः पुण्यपापानुरूपत्वात् जन्मनः 71/5 ) पापबाहुल्यात् विषयासक्तचित्तत्वं—तानधिकृत्य नात्र विचारः )

(2) देहरक्षणं 30/11 ( दुःखानां सहनं = तितिक्षा–इतरसाधनानि च—53 ) अभक्ष्यभक्षणात् चित्तं अशुद्धं भवति 30/3) शुद्धचित्ते आत्मा प्रकाशते 36/3 ) कर्मणाशुद्धचित्तस्य संसृतेर्दोषदर्शनं 68/10 ) स्वप्रयत्नावश्यकत्वं 44 + 69/3 ( भक्ति ज्ञान वैराग्ययुक्त मनसि आत्मज्ञानं प्रकाशते 78/4 ( विज्ञानदीपेन आत्मदर्शनं 25/12 ) स्वात्मा केन अपहृतः 12/10 ) मोक्षेण कोवा लाभः ? 12/9 )—न चेत् हानिः ?–∴मोक्षार्थी भवेत् 69/4 ) यावदहङ्कारः तावन्नमोक्षः—( वि 300-301 ) अहङ्कारलक्षणं = ( वि 106 )

(3) मुमुक्षा चतुर्विधा 12/8 ) मोक्षं पंचविधं 12/1 ) उत्तमजन्म व्यर्थं यदि चेन्न मोक्षः 12/6 + 68/11 )—सः आत्महा 21/3 ) शाब्दज्ञानमात्रेण न मोक्षः 5/3 + 61/7 ) ? बुद्धेर्न बोधः

10/4-8 ) कः पाषण्डी ? 54/8 + 66/7 ) किं प्रमाणं 54/9 + 75 ) मोक्षेण लाभः ? 12/9 )

(4) श्रेयस्कामा विवेचकास्तु ( 69/4 ) विषयसुखं जन्मं च अनित्यमिति निश्चित्य स्वात्मश्रेयसे यतन्तोपि—कर्म वा भक्तिः – योगः ज्ञानं, वा श्रेयोमार्गः इत्यस्मिन् विमोहिताः । प्रायशः देवेभ्यः योगक्षेमं प्रार्थयन्ति । मन्त्रोच्चारणेन न पापनाशनं 68/13 ) ? अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभं 68/12—13 ) विग्रहादिषु देवताभक्तिः तामसानां 70/9 ) भगवच्चरणता त्रिविधा 67/6 ) भक्तिः बहिरंगसाधनं 78/6) आत्मनिष्ठा अन्तरंगसाधनं 53/7 + 80/4 ) न बुद्धिभेदं जनयेत् कर्मसंगिनां 68/3 )

(5) द्वैतशास्त्रं न सत्यं ? साधनतयाभ्यस्तं 78/6 ) ज्ञान कर्मणोः विरुद्धस्वभावत्वात् न अंगांगिभावः 74 ) ∴ सन्यासानन्तरमेव मोक्षमार्गः 74 ) त्रिविधो जीवः 15/4 ) मुख्यस्य उपदेशः 61/6 ) व्यावहारिकस्य उपदेशश्चेत् विविदिषुरपि मुख्यो, भविष्यति 62/4 ) वेदान्तश्रवणमात्रं न ज्ञानं न च मोक्षसाधनं 10/5 ) श्रवणार्थी जिज्ञासुः श्रवणं जघनं 53/3 + 46) ज्ञानं 10/2 ) विज्ञानं 10/6 ॥ करणत्रयसाध्यं मृषा 10/8 ) श्रवणकाले भक्तिलिंगं 84/1 + 80/4 + 78/6) मननकाले लिंगं 56/2, श्रवणसमाध्योः फलतारतम्यं 64/3) स्नान-उपवासादिना, न मनोनाशः= 78/9 ) अविवेकिनां उपवासेन कायक्लेशः 78/9 ) शास्त्रं= 78/6 78/11 ) अभ्यस्तं 84/3 )

(6) मोक्षप्राप्तौ ज्ञानं न योगं च इदमभ्यसेत् 5 ) ज्ञेयं ज्ञाने-

कसाधनं.'.ज्ञानं, आदौ अभ्यसेत् 5/1) आत्मनिश्चयपर्यन्तं पर्यटेत्—निश्चितेतु न पर्यटेत् 63/2–3) विविदिषूणां अनुष्ठानावश्यकत्वं 47/2+51) अयोगी नैव आत्मानं पश्यति 35) .'.नाडिशोधनेन नादानुसन्धानेन च चित्तप्रसादः 25/12) नाद श्रवणं 30/12+56/2-3) योगस्य जिज्ञासुरपि महत्फलमवाप्नोति 37/3-4+38/5) योगरहितज्ञानेन न मोक्षः 24) सर्वत्र पुरुषप्रयत्नः 44)

(7) भावनया भाव्यस्य लाभः 30/2+32/4+37) ब्रह्मवृत्त्या एव ब्रह्मत्वं=18/7+28/6+30/7) ब्रह्मवृत्तिः श्रवणमात्रेण जायते वा 36/1) ज्ञाननिष्ठा कथं कार्या 46/8) तस्य वागमोघः 25) ज्ञाननिष्ठस्य न कर्मावसरः 46/7) कः आत्मवित् 12/11) आत्मज्ञानिन न पूर्ववत् संसृतिः 12/5) बन्धं च मोक्षं च मृषा 12/12) व्यवहारार्थं विद्या अविद्येति कल्पना=शं॥ ज्ञेयमालोक्य ज्ञानं परित्यजेत् 8/1)=त्यजेत् ग्रन्थमशेषः 8/1=विज्ञानानन्तरं)।

(8) परमहंसः साक्षान्नारायणः 70/4) योगी महाशक्तियुक्तः 59/2) तस्य मनःप्रसादः सुखावहः—क्षोभमनर्थकरं 70/7-8) तथापि निग्रहशक्तिमदर्शयन्-युगधर्ममनुस्मरन् उपकारिणे प्रत्युपकारयेत् मनसा वचसापि वा) यतिदूषणं मास्तु 70/3) नापृष्टः कस्यचित् ब्रूयात् न च अन्यायेनपृच्छतः 78/1) अविमुक्ते प्रविष्टानां विहारस्तु न विद्यते 78/1) यो भवेत्पूर्वं सन्यासी धर्मतः तल्यतो यदि) तस्मै प्रणामः कर्तव्यः नेतराय,

कदाचन 65/8 ) द्रव्यार्थं अन्नवस्त्रार्थं सन्यसेदुभयभ्रष्टः 74/1 ) न उपवासपरः-न तीर्थसेवी स्यात् 63 ) देहो देवालयः-.˙.न अत्यन्तमुपतापयेत् 31/4 ) तपसा प्राप्यते सत्वं 73 ) सारं अजानन् चन्दनभारवाही 32/8 ) वासनाक्षय-विज्ञान-मनोनाशा समकालं चिराभ्यस्ता फलदाः—एकैकशो न सिद्धिं प्रयच्छंति.˙.त्रयमेव समाश्रय 30/17 ) सन्यासी—ज्ञानी—योगी तेषां भेदः 78/13 )

(78) इतरविषयाः

(1) = श्रु=संत्यज्य हृद्गुहेशानं देवमन्यं प्रयान्ति ये । ते रत्नमभिवांछन्ति त्यक्तहस्तस्थकौस्तुभाः ॥ परमहंसः ध्यानपाटवेन तुरीयातीतो भवति । ? सर्वं अप्सु सन्यस्य दिगंबरः मन्त्र क्षौर अभ्यंगस्नान पुण्ड्रादि विहाय शरीररक्षादिकं दग्ध्वा विद्यापाण्डित्यं भस्मीकृत्य दिवा रात्राद्यनतुस्मरन् यत्प्राप्तं तेन तस्य प्राणधारणम् ॥ परमहंसस्य मानसस्नानम् ॥ अविमुक्ते प्रविष्टानां विहारस्तु न विद्यते ॥ विद्याभ्यासे प्रमादी यः स दिवास्वाप उच्यते ॥ नापृष्टः कस्यचित्ब्रूयात् न च अन्यायेन पृच्छतः ॥ जाया भ्रातृ सुतादीनां बन्धूनां च शुभाशुभं । श्रुत्वा दृष्ट्वा न कंपेत शोकहर्षौ त्यजेद्यतिः ॥ श्रु

(2) आत्ममन्त्र सदाभ्यासात् परतत्वं प्रकाशते । गोपनीयं प्रयत्नेन सर्वदा सिद्धिमिच्छता ॥ सर्वपापानां तारकं=ओम् ॥ ध्यानेन सदृशं नास्ति शोधकम् ॥ मनश्चेदुन्मनीभूयात् न पुण्यं न च पातकम् । श्रु ॥ + 17

(3) योगसिद्धिं विना देहो प्रमादाद्यदि नश्यति। स पुण्य-लोकानुषित्वा शरीरं चान्यदाप्नुयात् ॥= 37/3-4 ) संप्रज्ञात-समाधिः स्यात् ध्यानाभ्यासप्रकर्षतः। दीर्घकालाभ्यस्त सविकल्प समाधिना निर्विकल्पः सिध्यति ॥ आत्मा योगैकगम्यः ॥ श्रु

(4) वैराग्यतैलसंपूर्णे भक्तिवर्ति समन्विते। प्रबोधपूर्णपात्रेतु ज्ञप्तिदीपं विलोकयेत् ॥ श्रु=भक्ति ज्ञान वैराग्य युक्त मनसि आत्मविज्ञानं ॥ स्वस्वरूपानुसन्धानं भक्तिः ॥ वि ॥

(5) क्रमेण प्राप्यते प्राप्यं अभ्यासादेव नान्यथा ॥ प्राणायामेन युक्तेन सर्वरोगक्षयो भवेत्। प्राणायामवियुक्तेभ्यः सर्वरोग समुद्भवः ॥ विरक्ता ज्ञानिनश्चान्ये देहेन विजिताः सदा। ते कथं योगिभिस्तुल्या मांसपिण्डाः कुदेहिनः ॥ किमसौ मननादेव मुक्तो-भवति तत्क्षणात् ?। पश्चात् जन्मान्तरशतैः योगादेव विमुच्यते ॥ ज्ञाननिष्ठो विरक्तोपि धर्मज्ञो विजितेन्द्रियः। विना देहेन योगेन न मोक्षं लभते विधे॥ देहान्ते किं भवेज्जन्म तन्न जानन्ति मानवाः। अहंकृतिर्यदा यस्य नष्टा भवति तस्यवै। देहस्त्वपि भवेन्नष्टो व्याध-यस्तस्य किं पुनः। यदा पुष्टा चाहंकृतिः प्रवर्तते रुगादयः ॥ श्रु= अहंकारग्रहान्मुक्तः स्वरूपमुपपद्यते=वि ॥ समाधिना एव अहं-कारनाशः ॥

— (6) भक्तिः ? मिश्रस्य सत्वस्य भवन्ति धर्माः स्वमानिताद्या नियमा यमाद्याः। श्रद्धा च भक्तिश्च मुमुक्षुता च दैवीच संपत्तिरस-न्निवृत्तिः ॥ विशुद्धसत्वस्य गुणाः प्रसादः स्वात्मानुभूतिः परमा-प्रशान्तिः। तृप्तिः प्रहर्षः परमात्मनिष्ठा यया सदाऽऽनन्दरसं सम्-

च्छति ॥ अव्यक्तमेतत्त्रिगुणैर्निरुक्तं तत्कारणं नामशरीरमात्मनः ॥ ( वि ).∵.रजोमिश्रितज्ञानरहितमनोवृत्तिः भक्तिः ॥=श्रद्धा च भक्तिश्च बहिरंग साधनं—मनः प्रसादः, आत्मनिष्ठा च अन्तरंगसाधनं मुमुक्षोः ॥.∵.सत्वमवष्टभ्य स्वाध्यासापनयं कुरु ॥ वि । +74 ( एको ज्ञानी प्रशान्तात्मा स सन्तरति नेतरः )=नारदः =श्रु । .∵.भक्ति मात्रं न मुक्ति साधनम् ॥ द्वैतशास्त्रं न सत्यं किं तु बहिरंगत्वेन अध्यस्तं ?=शास्त्रं=अंशद्वयवति निगमे साधयति द्वैतमेक एवांशः । अद्वैतमेव वस्तु प्रतिपादयति प्रसिद्धमपरोंशः । अद्वैतं निजरूपं तस्मिन्द्वैतं न सत्यमध्यस्तं । यत्र प्रयोजनं स्यात् प्रतिपादयति श्रुतिस्तदेवासौ ( शं )=.∵.पूर्वाश्रमेषु साधनचतुष्टयसंपादनाय कर्म-भक्तिः-द्वैतप्रतिपादकं सर्वमपि-उपयुज्यते न तु मुक्तये=( शं ) ॥ ? कर्मणि भक्तौ च सम्यग्ज्ञानं नास्ति । ब्रह्मात्मैकत्व विज्ञानं सम्यग्ज्ञानं=बि ॥ .∵.14/5-6=~~14/5-6~~ -+70/9 )

(6) आत्माभासा परिज्ञानाद्याथात्म्येन बिमोहिताः । अहंकर्तारमात्मेति मन्यन्ते ते, निरागमाः । उ)=वेदप्रमाण रहिताः बुद्धौ प्रतिबिंबितमहंकारमेव आत्मेति मुह्यन्ति ॥ ( बौद्धादयः )

(7) एकस्मिन् अवभासे न अन्यस्य अवभासः विरुद्धस्वभावत्वात् ।=रज्जुरूपे परिज्ञाते सर्पखण्डं न तिष्ठति । अधिष्ठानं तथा ज्ञाते प्रपंचः शून्यतां गतः ॥शं॥ दृश्ये स्फुटी भवति नेष्यतएव भूमा—भूम्नि स्फुटी भवति नेष्यतएव दृश्यं ॥ब्र॥

(8) ध्वनेरंतर्गतं ज्योतिः ज्योतिरंतर्गतं मनः। तन्मनो विलयं याति तद्विष्णोः परमं पदं ॥ श्रु

(9) वल्मीकताडनादेव मृतः किन्तु महोरगः। श्रु)=प्रातस्नान उपवासादि शरीर क्लेशेन न मनोनाशः।

(10) यस्य वर्णाश्रमाचारो गलितः स्वात्मदर्शनात्। स वर्णाना-श्रमान् सर्वानतीत्य स्वात्मनिस्थितः। सोऽति वर्णाश्रमी प्रोक्तः। न तस्य वर्ज्या- वर्ज्यं कल्पना ॥ श्रु

(11) अन्तस्त्यक्ताशः बहिस्सर्वसमो भव। सहस्रायुषापि शास्त्रान्तं नाधिगच्छति। ∴विहाय शास्त्रजालं यत्सत्यं तदुपास्य-ताम्। श्रु ॥

(12) उपवासः = उप समीपे वासः। अविवेकिनां काय क्लेशः ॥ श्रु ॥

(13) सन्यासः=गृहस्थाश्रमवत् आश्रमान्तरं-विधि निषेध शास्त्रसहितम् ॥ अतिवर्णाश्रमी = 78/10) ज्ञानी 12/11)= ( चण्डालोस्तु स तु द्विजोस्तु ) ॥ सन्यासी अतिवर्णाश्रमानन्तरम् =ज्ञानी ॥ समाधिना सहजनिष्ठां प्राप्तः=जी. मु सः=न सन्यासी—ज्ञानी—योगी वा ॥ पूर्वजन्म संस्कारेण यः कोपि ज्ञानी—योगीवा भविष्यति ॥ (स्व)

## (79) समाधिमधिकृत्य पूर्व पक्षाः।

(1) शास्त्रप्रमाणोत्पन्न ज्ञानस्य को नाम बाधः किमर्थं समाधिः।

(2) अहं ब्रह्मास्मीति जपेनैव मोक्षः भ्रमर कीट न्यायेन—न समाधिना।

(3) श्रवणे असमर्थानां मन्दानामेव समाधिः/उत्तमानां श्रवण-मेव विहितम् ॥

(4) एतेन योगः प्रत्युक्तः—इति सूत्र वचनाच्च " " ॥ आवृत्ति-रसकृदुपदेशात् ( सू ) ॥

(5) यत्तु वेदान्तिनं वा नित्यानन्दावाप्तिं परममोक्षं कल्प-यन्ति तदेव वयं न मृष्यामहे ॥ (यो) = विज्ञान भिक्षुः ।

(6) सन्दिग्धानां वेदान्तवाक्यानां संशय विपर्यय निरास-मुखेन वेदान्त वाक्यानां निर्णयानुकूलः विचारः=श्रवणम् ॥ इद-मेव श्रवणं ( अथातो ब्रह्मजिज्ञासा )—इति जिज्ञासा सूत्रे उप-दिष्टम् । तदंगत्वं मननिदिध्यासयोः=असंभावना विपरीत-भावना निवर्तनमुखेन श्रवणोपकारित्वं मननिदिध्यासयोः ॥ (विवरणकारः)

(7) श्रीमत् शंकरमतोपजीविनस्तूपनिषदाः प्रपंचानृतवा-दिनः । तेषां हि अधिष्ठान ज्ञान दार्ढ्ये सति कल्पितस्य चित्तस्य अदर्शनं अनायासेन उपपद्यते । ∴भगवत्पादाः न कुत्रापि ब्रह्मविदां योगापेक्षां उपदिशन्ति । ∴ परमहंसाः वाक्य विचारएव प्रवर्तन्ते ब्रह्म साक्षात्काराय नतु योगविचारेण चित्तनिराकरणे—तस्य अन्यथा सिद्धत्वात् ॥ गू 6/30)

(8) देवानवज्ञाय पुनरनिष्टप्रसंग निवारणाय निर्विकल्प समाधिमकरोदिति वसिष्ठेन सूत्रितः मुमुक्षुभिर्हेयश्च समाधि रिति ॥ गू 6/15

(9) शंकरानन्दीयं=गी 6/15 ॥ श्रवण मात्रेण श्रमं उत्सृज्य

अवश्यं विदेहमुक्तिः सूचितं भवति नतु सांसारिकाण्यैश्वर्याणि समाधिफलानि ॥ गी 18/50 = सन्यस्य श्रवणं कुर्यात्। उपनिषदमावर्तयेत्। आवृत्तिरसकृदुपदेशात्। आसुप्ते राम्रृतेः कालं नयेद्वेदान्त चिन्तया। तत् त्यागी पतितो भवेत्। ∴ प्रणव जपादिकमंगं कृत्वा विचारमंगिनं कृत्वा यावत् सम्यगात्मविज्ञान—मुदेति तावत् अजस्रं वेदान्तावृत्यैव भवितव्यं तदेकप्रयोजनं स्यात् सन्यासस्य। ∴ समाहित बुद्धया सम्यग्विषयीकृतस्यैव ब्रह्मणो याथात्म्यावधारणम्। ज्ञाननिष्ठा श्रवणेनैव ॥ गी 18/51 = (बुद्धयाविशुद्धयायुक्तः…) = अहं ब्रह्मास्मीति प्रत्ययावृत्या वेदान्तवाक्यजन्यबुद्धया केवल श्रुति मात्रेणैवेति निश्चित्य परिमित हित मेद्धयाहारः सदा अनुष्ठानपरः अहंकारं = महाकुल प्रसूतोहं महतां शिष्योऽहमिति अभिमानं त्यक्त्वा—निग्रहानुग्रह अनारंभात् समः सर्वेषुभूतेषु—एतद्व्याख्यातु (गी-भा) विरुद्धं—46/7) अत्रैते श्लोका भवन्ति—बुद्धया विशुद्धया युक्तः धृत्यात्मानं नियम्य च। शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च। विविक्तसेवी लघ्वाशी यतवाक्कायमानसः। ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः। अहंकारं बलं दर्पं कामं क्रोधं परिग्रहं। विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ (गी 18/51)

पू 10 = किं अतिविस्तरेण-अन्येन महागुरुणा च एवं निश्चितमस्ति। = सगुणध्यानं निर्गुणध्यानं वा = प्रणवोपासनं तुरीयोपासनं वा—सविकल्पः निर्विकल्पसमाधिर्वा—वेदान्तविचारे असमर्थानां मन्दबुद्धीनामेव विहितं-फलं च तेषां पिण्डमुत्सृज्य

करंलेढीति—वत् संवादिभ्रमन्यायेन ॥ अयथा वस्तुविज्ञानात् फलं लभ्यत ईप्सितं । काक तालीयतः सोऽयं संवादिभ्रम उच्यते । (प) 9/130-151

पू— अपि च ( प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः…गी 6/41 ) इत्यत्र = योगभ्रष्ठः = तत्वसाक्षात्कार पर्यन्तं विचार रहितस्य वेदान्त विचारबलादेव पुण्यलोकप्राप्तिः—इति व्याकरोति ॥ प—9/46/श्रवणं नाम वेदान्त विचारणमेव = (तत्वज्ञानं)—विचारणमेव मुक्तिसाधनं ∴ आमृतेः कालं नयेद्वेदान्त चिन्तया—इति निर्धारितम् ॥ प 9/19-133

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीस्समाः । शुचीनां श्रीमतां गेहे योग भ्रष्ठोऽभि जायते ॥ गी

## ( 80 ) उदाहृत महतां सन्निधानेषु

कोऽहं वराकः । तथापि सिद्धान्त मारभ्यते ॥ सि = न-न । योगभ्रष्ठः = योगमार्गे प्रवृत्तः सन्यासी = गीभा ॥ ∴ योगिनामेव पुण्यलोकाः न वेदान्त विचारवतां ॥ योगजः संस्कारस्य न दीर्घकालस्थस्यापि विनाशः । = भा + 37/3

योगेनरहितं, ज्ञानं न मोक्षाय भवेद्विधे ॥ श्रु 66 + सन + शं ॥ सि = पू ।-2-3-6-7-8-9 = दशमे अन्तर्भूताः ।

पू 4 + 5 = योगः अत्र पातञ्जलयोगः इति भाष्योक्तिः । 5 = सः पातञ्जलयोगी ∴ राजयोगं न जानाति ।

पू 6 ॥ सि=श्रवणानन्तरं—श्रवणं विसृज्य मननं—तदनन्तरं निदिध्यासनं ।

( 1 ) पू 10 ॥ सि=न. न.श्रवणमधिकृत्य ( श्रु )=अभ्यसेत् ब्रह्मविज्ञानं वेदान्त श्रवणादिना । गुरूणां च हिते युक्तः तत्र संवत्सरं वसेत् । ततः संवत्सरस्यान्ते ज्ञानयोगं प्राप्य आश्रमत्रयमुत्सृज्य प्राप्तश्च परमाश्रमम् । अनुज्ञाप्य गुरूंश्चैव चरेद्धि पृथिवीमिमाम् । कुटीचक बहूदकयोः श्रवणं—हंसपरमहंसयोर्मननं—तुरीयातीतअवधूतयोर्निदिध्यासः । सर्वेषां आत्मानुसन्धानं विधिः ॥...सपरिव्राट् सर्वक्रिया कारक निवर्तको गुरु शिष्य शास्त्रादि विनिर्मुक्तः । शास्त्रवासनां लोकवासनां देहवासनां त्यक्त्वा वमनान्नमिव प्रवृत्तिसर्वं हेयं मत्वा यः सन्यस्यति स एव ज्ञानसन्यासी ॥ न शास्त्राभ्यासः यतेः ॥ अस्तिचेत् शवालंकारवत् । न बाह्यदेवार्चनं कुर्यात् न अध्येतव्यो न श्रोतव्यः अन्यत्किंचित् प्रणवादन्यम् ॥=श्रु ।

( 2 ) ध्यानमधिकृत्य ( श्रु )=मननादौ सन्यासिनामधिकारः तपोध्यानं विशेषतः । पिधाय बुध्या द्वाराणि मनो ध्याने निवेशयेत् । अयत्नेन प्राप्तमाहरन् ब्रह्म प्रणवध्यानानुसन्धानपरो भूत्वा एकश्चरेत् । हंसपरहंसयोः ध्यानाधिकारः । ते ध्यानयोगानुगता अपश्यन् । स्वरूपानुसन्धान ब्रह्मप्रणव ध्यानमार्गेण परमहंसो भवति । शान्तमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥ स ब्रह्म प्रणवः भानुवन्मुमुक्षूणामाधारः परं ब्रह्मत्वाद्विराजते । तेनैव

ब्रह्म प्रकाशते। सः श्रेष्ठः स एव जगद्‌गुरुः। ∴अन्वेष्टव्यं प्रयत्नेन ज्योतिरान्तरम् ॥ ( श्रु )

( 3 ) समाधिमधिकृत्य=यदस्मिन् ग्रन्थे दर्शितं+श्रीमत् शंकर भगवत्पादैः ?=कृत श्रवणस्य समाधिः 19/1 ) जिज्ञासुः 53/3 ) शास्त्रे अधिकृतः 61 ) श्रवणानन्तरं समाधिः 19/1+22) श्रवणमुद्दिश्य निदिध्यासं लक्षगुणं अनन्तगुणं निर्विकल्प समाधिः= 64/3) आत्मा कथं लभ्यते 27) ज्ञाननिष्ठा कथं कार्या 46/8) श्रवण मात्रेण न ज्ञानं—10 ) इत्यादिभिः उपदिशन्ति ॥ 31/2 )

गीतायां=ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना। अन्ये सांख्ये न योगेन। अन्ये श्रुत्वाऽन्येभ्य उपासते। तेपि चाति-तरन्त्येव मृत्युं श्रुतिपरायणाः ॥ गी 13 )=केचिदुत्तमाः ध्यानेन पश्यन्ति—मध्यमाः सांख्य योगेन। मन्दाः—कारुणिकेभ्यः गुरुभ्यः श्रुत्वा कालेन उत्तमा भूत्वा मुच्यन्ते=भा )=मन्दानामेव श्रवणे अधिकारः ॥

( 4 ) एवं उत्तमाधिकारिणां उपदेशमात्रेण ब्रह्मवृत्तिः जायते 36/1 ) ब्रह्मवृत्या एव ब्रह्मतां प्राप्ताः नेतरे ब्रह्मवादिनः श्रवणार्थिनः 30/7 ) उत्तमानामपि ब्रह्मवृत्तिर्नाम समाधिना एव अहंकारादि वासनानाशः 5/2 ) इतरेषांतु वेदान्त श्रवणं—आहारादिनियमाः-प्रणवार्थानुसन्धानाद्याः × ये शास्त्रविहिताः ॥ तेपि मुख्यो भूत्वा समाधिना मुच्यन्ते न श्रवणमात्रेण=51 ) ब्रह्मवृत्या=समाधिना= सम्यग्ज्ञानेन ज्ञेयालोकनं=35+54/4 )

( 5 ) श्रीरामस्यापि ( संकल्पपूर्वकमभूत् रघुनन्दनस्य नाहं विज्ञान इति कंचन कालमेतत् ? = इयतो दृश्यजातस्य ब्रह्माण्डस्य जगत्स्थितेः कथं मुने असत्ता स्यात् कमेरुः सर्षपोदरे ? ।।) इति संकल्प त्यागानन्तरमेव स्वरूपज्ञानमासीदिति श्रूयते ।। अपिच= निमेषार्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना । यथा तिष्ठन्ति ब्रह्माद्याः सनकाद्याः शुकादयः ।। अ ) ∴ब्रह्मवृत्ति परिपाकात् सहजनिष्ठा जायते ।।=28/6 )

( 81 ) पुनश्च-पू=( योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव । ब्रह्मास्मीति धियाऽशेषामहं बुद्धिं निवर्तयेत् ।। निवृत्तायामहं बुद्धौ ममधीः प्रविलीयते ।।= अज्ञाननिवृत्तिः सम्यज्ञानेनैव सम्यज्ञानं वेदान्तागम वाक्यादेव-आत्मानात्म अनवबोधमेव सर्वानर्थहेतुः । ∴चेतना चेतनयोर्विरुद्धरूपकथनेन अनात्महानतः आत्मा सिध्यति ।

( 82 ) ( 1 ) सि=वाढं अनात्मनिवृत्या आत्मसिद्धिः । सम्यज्ञानेनैव अनात्मनिवृत्तिश्च इति । सम्यज्ञानंतु न शास्त्र पाण्डित्यम् 10/4-5 ) समाधिना एव सम्यज्ञानम् = 10 + 5/2 ) संज्ञानं विज्ञानं प्रज्ञानं जानदभि जानत्=श्रु ।। समाधिनिष्ठा एव मुच्यन्ते-न श्रवणार्थिनः = ( वि–357 )

( 2 ) अपिच-असंगत्वादात्मनः कर्तृ कर्म करण सिद्धिः नस्यात् । तथा एकस्मिन् अवभासे न अन्यस्य अवभासः=78/7 ) एवं ग्राहकस्य = प्रतीचः स्फुरणसमये ग्राह्यस्य=पराचोः स्फुरणं नास्ति विरुद्ध स्वभावत्वात् । परागपेक्षया अहंधीः श्रवणं आभासस्य निषेधश्च अध्य-

द्रष्यतु प्रमाणेन विनैव सिद्धिः स्यादेव ॥ तर्हि चिदाभासाभ्युप· गमेन किं फलं स्यात् ? । आभास द्वारा तत्वमसीत्युपदेशः अवच्छिन्नस्य प्रत्यगात्मन एव नतु व्यावहारिकजीवस्य । उपदेशानन्तरं अवच्छिन्नस्य=उत्तमाधिकारिणः कर्तव्यं किमपि नास्ति ब्रह्मात्मनाऽवस्थानं नाम समाधिं विना=36/1 ) ( सर्ववाच्य विवर्जितः—ब्रह्मास्मीत्यतिदूरतः=श्रु )

( 3 ) व्यावहारिकस्य मन्दस्य उपदेशश्चेत् । तस्य ग्रामैकरात्रं कौपीनयुगलं त्रिकालस्नानं माधूकरं अनुष्ठान जप श्रवणादयो ये शास्त्र विहिताः 36/1 ) अनन्तरं–श्रवणं विसृज्य मननात् मुनिः=56/2-3 ) सः विद्वत्सन्यासी— तस्यैव राजयोगः इति निरुपचरितैव इष्यताम्=8/4 ) श्रवणमात्रेण तुष्यतां विविदिषूणां पुण्यलोकोपि नास्ति–तस्मात् मुमुक्षुः ज्ञानं च योगंच दृढमभ्यसेदिति व्यनक्ति=5/1+37/3 ) श्रवणे प्रवृत्तिस्तु जघनं मिश्रसत्वप्रधानत्वात्=53/3 ) परमात्मनिष्ठातु शुद्धसत्व प्रधाना ॥

( 83 ) पूर्वपक्षी पुनर्विवक्षुः ॥ तस्यसमाधानम् ?

( 1 ( अद्य दशघण्टायां सूर्यग्रहणमिति शास्त्रतः ज्ञात्वा सूर्यदर्शनेच्छया=( घटोदके बिंबितमर्कबिंबं आलोक्य मूढो रविमेव मन्यते । तथा चिदाभासमुपाधिसंस्थं भ्रान्त्याऽहमित्येव जडोऽभिमन्यते ॥ घटं जलं तद्गतमर्कबिंबं विहाय सर्वं विनिरीक्ष्यतेऽर्कः । तटस्थ एतत्रितयावभासकः स्वयंप्रकाशो विदुषा यथा तथा । देहं धियं चित्प्रतिबिंबमेवं विसृज्य बुद्धौ निहितं गुहायाम् । द्रष्टार-

मात्मानं अखण्डबोधं सर्वप्रकाशं सदसद्विलक्षणम्। नित्यं विभुं सर्वगतं सुसूक्ष्मं अन्तर्बहि:शून्यं अनन्यमात्मनः। विज्ञायसम्य ङ्निजरूपमेतत् पुमान्विपाप्मा विरजो विमृत्युः॥ नान्योस्ति पन्था भवबन्धमुक्तेः॥ वि॥=देहं इन्द्रियं धियं चित्प्रतिबिंबसहित अहं-कारंच अनात्मतया विसृज्य सूक्ष्म बुध्या समाधिना ज्ञातव्यम्=26)

(2) पू=( शास्त्रोक्तेनैव मार्गेण सच्चिदानन्दनिश्चयात्। परोक्षमपि तत् ज्ञानं तत्वज्ञानं नतु भ्रमः=प 9/19॥ ध्यानाभावे ध्येयं विलीयते--ज्ञानाभावे शास्त्रनिश्चित ब्रह्मता न विलीयते-प 9/117)

सि=( स्वेनैव वेद्यायत् ज्ञानं परेषांवाक् आनुमानिकम्) श्रुति-वाचि श्रद्धा चेत् स्वानुभवानन्तरमेव तन् सम्यज्ञानम्=10/2)

∴स्वानुभवं विनैव वचनं अनुमानसेव—10) ज्ञानाभावे ब्रह्मत्वमिवि वचनं अयुक्तमिति भाति ब्रह्मणः ज्ञानस्वरूपत्वात्॥

## (84) भक्तिलिङ्गं समाधौ न कर्मावसरः

(1) अपि च गुरुशुश्रूषया भक्त्या श्रुत्वा-मननेन वस्तुस्वरूपं निश्चित्य तं पुनः द्रुते चित्ते स्थिरतया विनिक्षिप्य तन्मयध्यानयोगेन ब्रह्मत्वं 16/2) नान्यथेति श्रुत्याचार्योपदेशः 25/12) अत्रैते श्लोका भवन्ति ( मोक्षसाधनसामग्रियां भक्तिरेव गरीयसी। स्व स्वरूपानुसन्धानं भक्तिरित्यभिधीयते)। वि+78/6) द्रुतौ सत्यां भवेत्भक्तिः अद्रुतौ तु न किंचन॥∴सम्यज्ञानं नामसमाधिना एव ब्रह्मत्वमिति श्रुतिशतैरुद्घुष्यते॥

(2) अपि च समाधौ न कर्मावसरः ?। इन्द्रियैः क्रियमाण-महंकरोमीत्यध्यासेन कृतं=कर्म=श्रु ॥ (उत्पाद्यमाप्यंसंस्कार्यं -विकार्यं च क्रियाफलम्) ∴न कर्मावसरः=ओंकारवाच्यहीनात्मा सर्ववाच्यविवर्जितः) ब्रह्मास्मीत्यति दूरतः) श्रु ॥ स्वात्मन्य-वस्थानं=समाधिः ॥∴तर्कैर्जल्पैः शास्त्रजालैर्युक्तिभिर्मन्त्रभेषजैः। न वशो जायते प्राणः सिद्धोवाऽयंविना विधे ॥ शुद्धे चेतसि तस्यैव स्वात्मज्ञानं प्रकाशते ॥ श्रु ॥ चित्तशुद्धिस्तु 36/3).∴ज्ञानं च योगं च दृढमभ्यसेत् 32/3) बाह्यशब्दैः कुतो मुक्तिः 22/5).∴कर्मणा भक्तया वा ताभ्यांसहित शास्त्र ज्ञानेन वा न मुक्तिः 78/6)

(3) सम्यग्ज्ञानं नाम समाधिना मुक्तिः नचान्यथा=वि ॥ सालो-क्यादिमुक्तिश्च-तत्प्राप्तौ देवपूजा-मन्त्रं-तन्त्रं-द्वैतशास्त्रं सर्वमपि अद्वैते अध्यस्तं। अद्वैतं च गुरुशिष्य श्रवण सहितं ब्रह्मणि अध्यस्तं= (निर्विकल्पं परं ब्रह्म यत्तस्मिन्नेव निष्ठिताः। एते धन्या एव मुक्ताः जीवन्तोपि वर्हिर्दृशाम्=45/7) ?॥ अधिकारिभेदात् (शास्त्रं)= पूर्वपूर्वं साधनतया विहितम्=12/1 67/3 70/9 78/6 12/6) ब्रह्मैव सत्यं। अध्यारोपापवादाभ्यां निष्प्रपञ्चः प्रपंच्यते ॥ बन्धश्च मोक्षश्च मृषैव -मूढा बुद्धेर्गुणं वस्तुनि कल्पयन्ति। वि ॥∴समाधिः - उत्तमानां जीवन्मुक्तिसिद्धये विहितम् इत्यत्र दर्शितम् ॥ परमेश्वर-समाधिसमये मन्मथदहनमभूत्। परमेश्वरः दक्षिणामूर्तिः— ब्रह्मादिदेवाः—सनकादयः—शुकादयः—भगवत्पादाः—सदाशिवब्रह्मेन्द्रः-बहवोमहान्तः ब्रह्मसमाधिनिष्ठाः। ∴मन्दानामेवसमाधिः इति वचनं अशास्त्रीयं अयुक्तमिति च भाति—अत्र श्रवणमुख्यानां प्रतिवचन-मपेक्ष्यते ॥

## (85) ग्रन्थसमाप्तिः १

एवं मनुष्यजन्म दुर्लभं श्रेष्ठं मोक्षार्हं च—मुक्तौ यत्नरहितानां जन्ममरण दुःखप्रवाहः अनिवार्यः इति प्रबोध्य—आत्मा स्वरूपतः ब्रह्मैवेति प्रदर्श्य—शरीर बुद्धीन्द्रियेषु भोग्येषु च अनात्मसु आत्मेति मोहं आशापिशाचिन्या कृतमिति प्रबोध्य—स्वरूपावस्थानं नाम-समाधिना एव ब्रह्मत्वं–तच्च परिपक्वचित्तानां विचारमात्रेण ब्रह्म-वृत्तिर्जायत इति श्री भगवत्पादाः प्रकरणग्रन्थेषु उपदिशन्ति ।

समाधिकरणे अशक्तानामनुग्रहाय सालोक्य सामीप्य सारूप्य सायुज्य सगुणोपासनफलानामोद्य—हठयोगसहित राजयोगेन तेषां कैवल्यमुक्ति च दर्शयन्ति ।

एवं स्थिते आत्मध्यानसमोधी मन्दबुद्धीनामित्युक्त्वा–भाष्य-पठनेषु मुक्तिं निश्चित्य वर्तमानानां मुक्त्यतिदूरत इत्यत्र दर्शितम् ॥∴पुण्यलोकादि लोकवासनां शास्त्रवासनां च ( नेति-नेतीति ) त्यक्त्वा ब्रह्मसमाधिना एव ब्रह्मत्वमिति अतिदुरूह मोक्ष-मार्गं श्रुत्याधार सहितमुपदिश्य तत्प्राप्तौ अनुष्ठान पद्धतिं च अनु-भवपूर्वकं निर्दिष्टवतां श्रीमत् भगवत्पादानां अस्माभिर्मुमुक्षुभिः दातव्य गुरुदक्षिणातु तैरुपदिष्टसारं सम्यक् ज्ञात्वा यदनुष्ठीयते तदेवेति तेषां वचनेषु, ज्ञायते ॥

( कस्तां परानन्दरसानुभूतिमुत्सृज्य शून्येषु रमेत विद्वान् । )
( अद्वयानन्दरसानुभूतौ समाधौ किं पठनीयं किं रचनीयं—बुद्धिश्च

न विचेष्टति। समाधिरेव जीवन्मुक्तिमार्गः।∴ब्रह्मानन्द पीयूष सिन्धौ समाधौ मज्जन्क्रीडन्मोदमानो रमस्वेति ) गुरूपदेशः ॥ – ओं ॥......

इति श्री परमहंसपरिव्राजवर्याणां श्रीशंकरानन्दसरस्वती-स्वामिनां शिष्येण सदानन्दसरस्वत्या संकलितः ( समाधिः ) समाप्तः ॥ॐ

---

Correspondence in Sanskrit, English or in Tamil.

